# मेधामन्थः

(उत्तर प्रदेश संस्कृत संस्थान, लखनऊ
के आर्थिक सहयोग से प्रकाशित)



लेखिका :

डॉ० नवलता

रीडर, विक्रमाजीतसिंह–सनातनधर्म–महाविद्यालयः, कानपुरम्

*लेखिका प्रकाशिका च :*

**डॉ० नवलता**

रीडर, विक्रमाजीतसिंह–सनातनधर्म–महाविद्यालयः कानपुरम्

**आवासः** के–६८०, आशियाना, लखनऊ

दूरभाषः – ०५२२–२४२३७८५



**प्रथमसंस्करणम्**

श्रावणी पूर्णिमा

विक्रमी संवत् २०६२

१९ अगस्त, २००५

**मूल्यम् :** रु. ६०.००

मुद्रकम् :

**नूतन आफसेट मुद्रण केन्द्र**

संस्कृति भवन, राजेन्द्र नगर,

लखनऊ – २२६ ००४

*डॉ. दयाशंकर शास्त्री*
एम.ए., पी–एच.डी., आचार्य
अध्यक्ष, संस्कृत विभाग (से.नि.)
डी.बी.एस. कालेज, कानपुर

आवास : 280188
१३३३, रतनलाल नगर,
कानपुर

---

दिनांक : १२–६–२००५

# शुभाशंसा

विदुष्या डॉ. नवलतया लिखिताः सर्वेऽपि निबन्धा आपाततः दृष्टाः मया। ते सर्वथा मौलिका अर्थगाम्भीर्य–भावगाम्भीर्य–विषयगाम्भीर्यञ्च द्योतमानाः तस्या अध्यवसायिकीं– दार्शनिकीं– वैज्ञानिकीञ्च सर्वविधां प्रतिभां व्यञ्जयन्ति। एते खलु शोधपराः जिज्ञासूनां पाठकानां कृते प्रेरणाप्रदाः पाथेयाश्च।

'वेदेषु विद्युच्चिन्तनमिति विषयमधिकृत्य पारदर्शिनीविद्युदूर्जाविषये यल्लिखितं लेखिकया तत्र मानवजीवने यान्युपयोगीनि साधनानि विद्यन्ते खलु तानि सर्वाणि वैद्युतिकीपराणि। ऊर्जाया विभागं कृत्वा यानि नूतनानि तत्त्वानि प्रदर्शितानि, तानि खलूपकारीणि सर्वेषां कृते। 'शब्दविवर्तस्य वैद्युतिकीमूलत्वम्' संज्ञके निबन्धे शब्दस्य निरूपणं यत्कृतं दार्शनिकपक्षतः वैज्ञानिकपक्षतश्च तत्तु सर्वथा नवीनम्। उक्तशब्दविवर्तसिद्धान्तेनोर्जापक्षे पदार्थस्य पदार्थे चोर्जाया रूपान्तरविषये सुष्पष्टं विवेचनं कृतं विद्यते।

मानवजीवने व्यक्तित्वविकासार्थं सांख्यमतानुसारेण व्यक्तेः व्याख्या कृता 'अव्यक्तस्य प्रकाशनं व्यक्तीभावो वा व्यक्तिरिति'। सामान्यदृष्ट्या शास्त्रीय दृष्ट्या च महत आरभ्य पञ्चमहाभूतपर्यन्तं प्रकृतेः विकाराः व्यक्ता इति उच्यन्ते 'त एव चेतनसंयोगाद्व्यक्तिरित उच्यते' एवंभूतस्य व्यक्तेः व्यक्तित्वविकासार्थमाहोस्वि–दात्मविकासार्थञ्च योगमनोविज्ञानसम्बन्धिन्यः युक्तयः सर्वथोपकारिण्यः। वस्तुतः शरीरविकासार्थं स्वस्थं मनः अपेक्ष्यते। व्यक्तित्वविकासे कुण्ठाहताशादयः मनोविकाराः अवरोधकानि तत्त्वानि तान्नपाकर्तुमष्टांगयोगादय उपायाः वर्तन्ते खलु योगदर्शने। तेषां प्रयोगेण जरामृत्युरोगैर्मुक्तो भवति मानवः। योगे चित्तप्रसादनाय शरीरावयवान् स्नायुतन्त्राञ्च सम्यक्तया सञ्चालनाय आत्मप्रत्यभिज्ञानाय च युक्तयः प्रतिपादिताः, अपि च कलहं दूरीकृत्य भ्रातृभावं स्थापनाय प्रेरकाः सत्सिद्धान्ताः समावेशिताः।

'तन्त्रागमेषु शिव इत्यत्र तन्त्रागमयोः शब्दयोः निरुक्तिं कृत्वा तयोः स्वरूपं प्रदत्तमभिनवगुप्तपादाचार्यमतेन। अन्यसिद्धान्तानुसारेण शिवशक्त्योः स्वरूपञ्चापि सुस्पष्टतया प्रतिपादितं लेखिकया।

प्राचीनकाले समाजमनुशासयितुं या दण्डव्यवस्था निर्धारितासीत् सर्वेषां वर्गाणां कृते सा तु सर्वथा न्याय्या इति 'दण्डनीतिविमर्शः' संज्ञकेन लेखेन स्पष्टीभवति। वादलम्बनं परिहातुमपि नियमा निर्धारिता आसन्। वर्तमानकालेऽपि नीतिनिर्धारकैश्चेत् प्राचीनभारतीयदण्डसंहिताआश्रियत्तर्हि सर्वजनहितं मानवाधिकारस्य रक्षा च भवितुमर्हति। एतन्मतं लेखिकायाः सर्वथा समीचीनम्।

कृषिविज्ञाने बीजवपनविधिः प्रमुखं साधनं मन्यते। यथा उत्तमसन्ततिकामनया शुभे मुहूर्ते नक्षत्रे च विविधैः मन्त्रैः गर्भाधानं नियोज्यते तथैव कृषिक्षेत्रेऽपि बीजवपनार्थं विविधाः नियमाः निर्धारिता प्राच्यकृषिवेत्तृभिः। ते तूत्तमबीजानां गुणाः तेषां संग्रहण–संरक्षण–संस्कारादयः सन्ति। लेखेऽस्मिन् विविधधान्यानां वापविधयः, वापकालः वापविधिनिषेधौ–बीजप्रबन्धनं कृषकस्य गृहे खलौ चोक्ताः। बीजस्य संग्रहणं सावधानतया भाव्यम्। सुपुष्टं स्वस्थं धान्यमुत्पादयितुम् उक्तलेखमाश्रित्य कृषकाश्चेदाचरेयुस्तर्हि स्वस्थराष्ट्रनिर्माणेऽपि ते साहाय्याः भवेयुः। कृषिसेचनार्थं कृत्रिमजलप्रवाहेण कुल्याप्रकल्पनस्य ये विधय उल्लिखिताः लेखिकया सर्वेऽपि ते उपयोगपराः कृषकाणां कृते लोके व्यवहारे च।

'भूगर्भचिन्तनम्' संज्ञके निबन्धे सप्तपातालानां संरचना तत्र विद्यमानाः सम्पदः वसुमतीं धरित्रीं समर्धयन्ति। तेषां निर्दयं संदोहनं पर्यावरणसंरक्षणार्थमथ च जीवन–संरक्षणार्थं सर्वथा परिहर्तव्यम् लेखिकाया मतमिदं प्रेरणादायकम्।

ग्रन्थमेतद् डॉ. नवलतायाः सूक्ष्मचिन्तनस्य परिचायकम्। अनेन ग्रन्थेन न केवलं पारम्परिकाः संस्कृतज्ञा अपितु वैज्ञानिका अपि लाभान्विता भवेयुरिति शुभकामना।

दयाशङ्कर शास्त्री

# निवेदनम्

**सदा या प्राणेषु स्फुरति चितिरूपेण भुवने।**
**तपोजन्यो यज्ञः प्रचलति हि यस्यां सहकृतौ।।**
**क्रियेच्छाज्ञानानां त्रितयमिव नित्यं विदधती।**
**त्रिकाले सा मेधा सततमिह लोके विजयताम्।।**

ब्रह्माण्डेऽस्मिन्ननादिकालतोऽनन्तपदार्थाः ज्ञानविज्ञानस्य विषयत्वेन राजन्ते। भारतीयचिन्तनसरण्यनुसारेण समग्रस्य सृष्टेः कारणं ब्रह्म सर्वाणि वस्तूनि तपसा मेधया चासृजत्। तपः कर्मणः पर्यायः मेधा च विज्ञानस्य केन्द्रमिति वक्तुं शक्यते। वस्तुतः सर्वेषामपि जन्यपदार्थानां रचना विज्ञानेन कर्मणा च भवतीत्यत्र नास्ति विप्रतिपत्तिः। सृष्टेरादित एव मनीषिणः तत्तत्पदार्थानवेक्ष्य मेधया तपसा च नवनवान्युपयोगीनि वस्तुजातानि विरचयन्तः आसन्। तत्तत्प्रविधयः तत्तदुपायाश्च देशकालविशेषस्य साहित्ये संरक्षिताः भवन्ति।

भारतीयपरम्परायाः परिप्रेक्ष्ये विचारणीयं यदत्र चतुर्दशविद्यासु चतुःषष्टिकलासु च प्रायः सर्वेषामपि जीवनोपयोगिविषयाणां समावेशः कृतो वर्तते, यस्योल्लेखोऽत्रत्ये संस्कृतसाहित्ये प्रचुरं प्राप्यते। धर्मार्थकाममोक्षपराणां निगमागमादिशास्त्राणां तन्त्रादीनाञ्च वैशिष्ट्यमेतद्यदेतेषामाध्यात्मिकमाधिदैविकमाधिभौतिकञ्चानल्पं महत्त्वमनुभूयते। महर्षीणां मनीषिणां विज्ञानिनां च मेधा सदैव तत्त्वानां मन्थने प्रवर्तते। तेषां दृष्टिराध्यात्मिकादीनां त्रयाणामपि पक्षाणामनुसन्धानेन यत्सारतत्त्वं प्राप मन्थस्येव तस्य सङ्ग्रहः काले–काले चिन्तनपरैः विचारकैः कृतः। वस्तुतः यत्किञ्चिदपि नूतनं दृश्यते लोके, तत्सर्वं पूर्वतः विद्यमानस्यैव संस्कृतं परिष्कृतञ्च रूपं भवति। शास्त्रवचनं कल्पनामात्रं जल्पमात्रं वा न भवत्यपितु तस्य याथार्थ्यं भवतीति विचार्य मत्सदृशयाऽल्पज्ञया तत्सारग्रहणस्य दुराग्रहपूर्णः प्रयासः नूनमेव तृणेन सागरमन्थन–स्योद्योगस्तथाप्येतन्मूले निहितायाः भावनायाः चर्चां कृत्वाऽत्मानमनधिकार–चेष्टापराधाद्वारणार्थं पूर्वपक्षस्य प्रस्तुतिचापल्यं मयावश्यं क्रियते। संस्कृतवाङ्मयं विश्वस्य समग्रस्यापि सम्भाव्यस्य ज्ञानविज्ञानस्य रत्नाकरो वर्तते। आत्मनः सीमितज्ञानोडुपेनातिगभीरं वाङ्मयजलधिं संस्तर्तुमशक्ता तटमात्रावगाहिन्या स्वबुद्धया

यदल्पं मन्थजातं लब्धं, तदेव काले–काले विविधविषयेष्वध्ययनचिन्तनमिषेण प्रस्तुतग्रन्थे सङ्कलितेषु निबन्धेषु संरक्षितम्। एते निबन्धाः यदा–कदा शोधसम्मेलनेषु सङ्गोष्ठीषु च प्रस्तुताः।

सुधीयाम् चिन्तनार्थमेतेषां प्रकाशनस्यावश्यकतानुभूता, यतोह्येतेषु भारतीयचिन्तनस्य व्यापकत्वं वैज्ञानिकत्वं च प्रतिपादयितुं प्रयत्नः कृतः। परमादरणीयैः गुरुवर्यैः प्रोफेसरजगदम्बाप्रसादसिन्हामहोदयैः मेधामन्थाख्यस्यास्य ग्रन्थस्य पुरोवाग्लेखनस्यानुरोधं स्वीकृत्य ग्रन्थः तल्लेखिका च गौरवान्वितीकृते। सामान्यपाठकानां रुचिरप्येतादृशानां विषयाणामध्ययने भवेदिति कृत्वा पुरोवाक् हिन्दीभाषयैव प्रस्तूयतामिति मे निवेदनं स्वीकृत्य गुरुचरणैः लेखिकां प्रति वात्सल्यमेव दर्शितम्।

विविधशास्त्रपारङ्गताः श्रद्धेयाः डॉ. दयाशङ्करशास्त्रिमहोदयाः अस्वस्थाः सन्तोऽपि ग्रन्थस्यावलोकनं कृत्वा सटिप्पणमाशीर्वचोभिरनुशंसया च लेखिकामुपकृतवन्तः। तेषां कृते दीर्घायुष्यकामनायुताः प्रणामाञ्जलयः समर्प्यन्ते।

उपभोगितावादिन्यस्मिन् विश्वे दूरसञ्चारस्य व्यापके क्रान्तिकाले पुस्तकानां प्रकाशनं क्रय–विक्रयोऽध्ययनं च ह्रासमुपगच्छन्ति। एवंभूतायां परिस्थित्यां पुस्तकप्रकाशनार्थमार्थिकसहयोगं प्रदायोत्तरप्रदेशसंस्कृतसंस्थानेन यदौदार्यं प्रथितं तदर्थं लेखिका संस्थानस्य निदेशकं डॉ. सच्चिदानन्दपाठकं प्रति सहायकनिदेशकं डॉ. चन्द्रकान्तद्विवेदिनं प्रति च कृतज्ञतां ज्ञापयति।

निबन्धानां टङ्कणे तत्रत्य एव पुस्तकालयाध्यक्षः श्री जगदानन्दः भूरि साहाय्यं कृतवान्। एतदर्थं तस्मै धन्यवादज्ञापनं लेखिकायाः कर्तव्यम्।

ग्रन्थस्य मुद्रणे लखनऊस्थितस्य संस्कृतिभवनस्य प्रकाशनविभागस्य सहयोगः भारतीयवाङ्मयं प्रति तस्यानुरागस्य द्योतकः। प्रूफसंशोधने अनुजकल्पः डॉ. विजयकुमारः कर्णः यत्साहाय्यं कृतवान् तस्य कृते सः साधुवादस्याशीर्वादस्य च पात्रमस्ति। टङ्कणविषयकत्रुटिमार्जनस्य यथासम्भवः प्रयासः कृतः तथापि क्वचित् त्रुटयः स्युः तर्हि विद्वांसः पाठकाः मर्षयन्त्विति प्रार्थये।

निबन्धानां विषयवस्तु जिज्ञासुपाठकानामुपकारेऽल्पमपि क्षमं चेत्तर्हि लेखिकायाः श्रमः सफलीभविष्यति। अथ च विदुषां सन्तोष एवं ग्रन्थस्य हिताहितस्य प्रमाणम् भविष्यति।

**नवलता**

श्रावणी पूर्णिमा

(विक्रमाब्द २०६२) १९–०८–२००५

# पुरोवाक्

समस्त दृश्य तथा अदृश्य जगत् उस परमात्मा की इच्छा, ज्ञान तथा क्रिया का ही परिणाम है। इच्छा सङ्कल्पशक्ति है, ज्ञान मेधा तथा क्रिया तप है। मानवीय सृष्टि तथा उसके समग्र भौतिक तथा आध्यात्मिक विकास का हेतु सङ्कल्प, मेधा तथा तप का समुच्चय है। उपनिषदों के अनुसार ब्रह्म ने एक से बहुत होने की इच्छा से सङ्कल्पपूर्वक तपस्या की, जिससे यह समस्त सृष्टि हुई। पुनः तपस्या और मेधा से मूलभूत जैविक पदार्थों की रचना करके सृष्टि का विकास किया गया। विकास के अनवरत क्रम को ही विज्ञान का मूल माना जा सकता है। भारतीय मनीषियों के चिन्तन के अनुसार परमात्मा ने वेदों में विकास के समस्त रहस्य को सञ्चित किया, जिसे साक्षात्कृतधर्मा ऋषियों ने अपनी विलक्षण मेधा से उद्घाटित कर यज्ञविज्ञान के रूप में प्रस्तुत किया। मेधा और तपस् (ज्ञान और इच्छा) के योग के रूप में लोककल्याण के लिए भौतिक इष्टसाधनभूत यज्ञ मानवजीवन के लिए उपयोगी छोटी से लेकर बड़ी से बड़ी आवश्यकताओं की पूर्ति के साधन बने।

अग्नि यज्ञ का अधिष्ठाता है, क्योंकि वही समस्त कर्मों का कारण है। सूक्ष्म रूप में वह ऊर्जा है, जो चेतना में, प्राण में, गति में व्याप्त है। प्रथम रूपवान् तत्त्व होने के कारण वह समस्त पदार्थजगत् की अभिव्यक्ति (रूप तथा आकार) का कारण है। अग्नि ही वाक् है। वह ज्योति भी है और ज्वाला भी। अग्नि ही प्राणियों के आहार का जनक है और वही उसका पाचक भी। इस कारण अग्नि को यज्ञ का देव, पुरोहित तथा ऋत्विक् कह कर ऋषियों ने उसकी प्रथम स्तुति की थी। अग्निसम्प्रेरित समग्र वैदिक मन्त्रविज्ञान तथा उसकी उपजीव्य विद्यायें लोकहित से साक्षात् सम्बद्ध होकर अपराविद्या के अन्तर्गत स्वीकार की गयीं तथा पराविद्या के मार्ग में उन्हें अनिवार्य घटक माना गया, जैसा कि ईशावास्योपनिषद् का कथन है कि विद्या (पराविद्या) और अविद्या (अपरा वेदविद्या), सम्भूति और असम्भूति, दोनों को ही जानकर पूर्णता को प्राप्त किया जा सकता है। शतपथ आदि ब्राह्मणों, आरण्यकों, उपनिषदों, कल्पसूत्रों तथा अन्य परम्परागत साहित्य में भौतिक तथा आध्यात्मिक दृष्टि से जीवन के विविध पक्षों की व्याख्या की गयी है। ऋषियों तथा मनीषियों ने अपनी विलक्षण मेधा का विस्तार समस्त अहैतुकी तथा हैतुकी (जीवनोपयोगी)

विद्याओं के रूप में इस स्तर तक किया कि जीवन और उसके भूत, भविष्य, वर्तमान की सम्भावनाओं का कोई कोना नहीं बचा, जो उनके चिन्तन से अछूता रहा हो। यह एक सुखद आश्चर्य का विषय है, कि समस्त आधुनिकतम भौतिक तथा आध्यात्मिक उपलब्धियों के बीज वेद, वेदाङ्ग, रामायण, महाभारत, पुराण, स्मृतियों, तन्त्रागमों और तत्तत् स्वतन्त्र शास्त्रों में प्राप्त होते हैं, किन्तु स्वधर्म तथा स्वदृष्टि को छोड़कर परधर्म तथा परदृष्टि की ओर भागने वाले हम भारतीयों के लिए आज अज्ञान और मूढ़ता की स्थिति यह है, कि पाश्चात्य जगत् की मुद्रा से अंकित ज्ञान को सत्य तथा आधुनिक मानकर अपने देश की प्राच्यप्रज्ञा को पुरातन तथा कालातीत (outdated) करकर उपेक्षित किया जा रहा है।

यहाँ उक्त स्थिति के कारणों की चर्चा अभीष्ट नहीं है, किन्तु इतना अवश्य है कि अज्ञान तथा मूढ़ता अन्यान्यसिद्ध हैं। जिस विषय का हमें ज्ञान नहीं होता है उसके प्रति मूढ़ता की स्थिति होती है तथा जब मूढ़ता होती है, तो अज्ञान उत्पन्न होता है। मूढ़ता वस्तुतः तमोगुण की अवस्था है, जो यथार्थ ज्ञान में बाधक होती है। अपनी निधियों के प्रति अज्ञान तथा मूढ़ता हमें न केवल परापेक्षी बना देती है, अपितु हमारे समग्र अस्तित्व तथा व्यक्तित्व पर प्रहार करती है। जिजीविषा जीव की स्वाभाविक प्रवृत्ति है; किन्तु जैविक परम्परा का विकास उसकी सङ्कल्पशक्ति, आस्था, विश्वास, संस्कृति, साहित्य, ज्ञान–विज्ञान तथा कर्म कर निर्भर करता है। ये विकासयात्रा के पाथेय हैं।

आज विश्वविकास के नाम पर त्वरा के साथ भागते हुए हम अपना पाथेय साथ ले चलना भूल गये हैं। उस पाथेय के अभाव में वह स्थिति आ सकती है, जब हम चलते–चलते इतने श्रान्त हो जायें, कि न तो पीछे लौटने का समय रहे और न आगे बढ़ने का साहस; किन्तु अभी हम इतना आगे नहीं बढ़े हैं, कि पीछे न लौट सकें। समय रहते हमें पीछे लौटना होगा। अपना पाथेय लेकर पुनः विकासयात्रा के पथ पर चलना होगा। हमारा सङ्कल्प इस विश्वास से पूर्ण रहे कि, अपने वाङ्मय, अपनी संस्कृति तथा अपनी परम्पराओं की ऊर्जा हमारी अप्रत्याहत विजय का मार्ग अवश्य प्रशस्त करेगी।

ज्ञान अनन्त है। अनन्त काल में स्थित अनन्त जीवन भी उस अनन्त ज्ञान तक पहुँचने के लिए पर्याप्त नहीं हैं, फिर कुछ वर्षों की आयु वाला एक जीवन तो एक जलबिन्दु के सहस्रांश के समान है, तथापि आनन्त्य के नैरन्तर्य में उस सहस्रांश का कोई दाय नहीं होता है, यह नहीं कहा जा सकता। और न ही मार्ग की वक्रता तथा उच्चावचों से युक्त दुर्गमता को देखकर पहले ही स्वयं को अनधिकारी समझ कर पराजय मान लेना बुद्धिमत्ता कही जा सकती है। जिस प्रकार ज्ञान अनन्त है, उसी

प्रकार उसे ग्रहण करने की दृष्टि भी अनन्त हुआ करती है। अतः वाक् तथा वाङ्मय के अनुशासन में रहते हुए यदि उसमें निहित ज्ञान को विविध दृष्टियों से देखा और प्रस्तुत किया जा सके तो दोष नहीं, अपितु ज्ञान की अनन्त यात्रा में बढ़ने वाले दुःसाहसी पथिक का एक उपयोगी पग हो सकता है, जिससे आने वाले पथिकों को दृष्टि मिल सकती है।

अस्तु। जिन भारतीय ऋषियों, मनीषियों तथा शास्त्रकारों की अजस्र–प्रवाहिणी मेधा ने ज्ञान–विज्ञान की परम्परा का दाय मानवजाति को दिया, उसके साररूप 'मन्थ' (नवनीत) को प्राप्त करने के लिए समर्थ विद्वान्, मनीषी तथा तत्त्वज्ञ यथाशक्ति मेधामन्थन में निरत रहे हैं। इनमें ज्ञान–विज्ञान के प्रायः सभी विषय सम्मिलित हैं, जिनमें से कुछ अत्याधुनिक समझे जाने वाले विषय भी हैं।

इस पुस्तक में विविध विषयों पर चौदह निबन्ध हैं। प्रथम तीन निबन्ध वैदिक विषयों पर हैं। प्रथम निबन्ध में समाज के भौतिक और आध्यात्मिक उत्कर्ष में वैदिक वाङ्मय की उपादेयता की चर्चा की गयी है, जिसका आधार जीवनमूल्य तथा जीवनपद्धति को प्रभावित करने वाली विद्याएँ, शिल्प तथा वे विज्ञान हैं, जिन्हें अत्याधुनिक विश्व की देन समझा जाता है। द्वितीय तथा तृतीय निबन्धों का सम्बन्ध भौतिक जीवन से है।' वैदिकदेवतानां वर्षोपकारकत्वम्' शीर्षक निबन्ध में वर्षा के लिए उत्तरदायी उन भौतिक तत्त्वों की चर्चा की गयी है, जिन्हें ऋषियों ने देवताओं के रूप में स्वीकार किया है। वर्षा ही जल का मूल स्रोत है। अतिवृष्टि तथा अनावृष्टि सदा से जनजीवन के व्यवस्थापन में प्राकृतिक बाधा के रूप में रही हैं। वैदिक ऋषियों ने प्रकृति तथा मानव के मध्य सामञ्जस्य का मार्ग चुनकर सूर्य, इन्द्र, वरुण, मरुत्, अपांनपात्, रुद्र, पर्जन्य आदि की देवभाव से स्तुति के द्वारा उनके भौतिक स्वरूप का विवेचन किया है। यज्ञ में उन देवताओं के लिए हवि प्रदान कर अन्तरिक्ष में पर्याप्त वर्षाजल की सृष्टि तथा यथाकाल वृष्टि उनका उद्देश्य होता था। शतपथब्राह्मण में यज्ञाग्नि के परिप्रेक्ष्य में 'अग्नेर्धूमो, धूमादभ्रम् अभ्राद्वृष्टिः' के मूल सिद्धान्त का प्रतिपादन किया गया है। किसी भी काल में इस सिद्धान्त के अनुसार तत्तद्देवताओं को प्रसन्न करके सन्तुलित वर्षा प्राप्त की जा सकती है।

'वेदेषु विद्युच्चिन्तनम्' शीर्षक निबन्ध में विद्युद् के विषय में वैदिक स्थापनाओं पर चिन्तन किया गया है। जैसा कि सर्वविदित है कि विद्युत् वर्तमान विश्व की सर्वाधिक शक्तिशाली तथा व्यापक उपयोगिता वाली उपलब्धि है, जिसके विना साधारण मानवसमाज के दैनन्दिन जीवन से लेकर बृहत्तम औद्योगिक तथा वैज्ञानिक प्रकल्प तक पङ्गु हैं। संरक्षित ऊर्जा के रूप में विद्युत् का आविष्कार वर्तमान विश्व, विशेषतः पाश्चात्य जगत् की देन समझी जाती है; किन्तु मूलतः विद्युत् की उत्पत्ति,

उसका स्वरूप, उसके निर्माण के लिए आवश्यक भौतिक घटक, विद्युत् के कार्य तथा उसके हानि–लाभ इत्यादि पक्षों पर वेदों में पर्याप्त चिन्तन हुआ है। विद्युत्, गौ, स्तनयित्नु, तडित्, दिद्युत्, वैश्वानर, पर्जन्य, माध्यमिक ज्योति, रुद्र, अशनि, अपांनपात् इत्यादि के स्वरूपविश्लेषण द्वारा विद्युत् के स्वरूप की व्याख्या की गयी है। आधुनिक भौतिकी विद्युत् की जिन मूलभूत विशेषताओं का विवेचन करती है, उन्हें आज से सहस्रों वर्ष पूर्व समय–समय पर भारतीय मनीषियों ने स्पष्ट रूप से निर्दिष्ट किया था। उनके अनुसार मूलतः विद्युत् अव्यक्त अग्नि है। अव्यक्त होने के कारण वह ऊर्जारूप होती है। विखण्डन द्वारा वह दीप्तिरूप में भासित होती है। आदित्य उसका प्रथम आश्रय तथा अन्तरिक्ष द्वितीय आश्रय है, जहाँ वह जल में स्थित होती है। सम्भवतः जल में विद्युत् की स्थिति का ज्ञान होने के कारण ही जलविद्युत् के निर्माण की परिकल्पना की जा सकी होगी। ज्योतिरूप से दिव्यलोक में विद्युत् निराश्रित रहती है, जबकि अन्तरिक्ष में उसका स्वरूप तडित् के रूप में होता है। स्तनयित्नु, दिद्युत्, रुद्र, अपांनपात् इत्यादि तडित् रूप विद्युत् की विशेष अवस्थायें कही गयी हैं। इन्द्र, वायु, आदित्य आदि के द्वारा अवताडित होकर विद्युत् ज्वालारूप से भासित होती है। कृत्रिम रूप से आधुनिक विद्युद्वैज्ञानिक तथा अभियन्ता जिस निर्वातीकरण के द्वारा विद्युत् के प्रकट रूप का निर्माण करते हैं, उसका आधार यही अवधारणा प्रतीत होती है।

यह अत्यन्त रोचक तथ्य है कि वैदिक ऋषि तथा उनके व्याख्याकारों ने विद्युत् का सूक्ष्म अवलोकन, निरीक्षण तथा विवेचन किया है। निरुक्तकार ने ताडनजन्य आघात से विद्युच्चुम्बकीय तरंगों की उत्पत्ति, उनका प्रकाशरूप से भासन तथा आकर्षणगुणत्व के साथ ही जल में रस रूप से दीप्त होने वाली विद्युत् का पार्थिव आश्रय में उपशमित होना भी वैदिकमन्त्रों के शब्दनिर्वचन के प्रसंग में बतलाया है। यही नहीं, उसके कुचालक तथा सुचालक माध्यमों की चर्चा भी उन्होंने की है। करीष से विद्युत् की उत्पत्ति का भी उल्लेख निरुक्तकार ने किया है, जो अत्यन्त आश्चर्यजनक प्रतीत होता है।

चतुर्थ निबन्ध में जीववैज्ञानिकों के द्वारा की गयी जीवन की व्याख्या का संक्षेप में विवेचन किया गया है। सार रूप में 'जीव' धातु का अर्थ है प्राणधारण। जीवन की व्याख्या प्राण, जीव तथा भाव के समुच्चय के रूप में की गयी है। पञ्चम निबन्ध में वर्तमान वैद्युतिकी (इलेक्ट्रानिक्स) के सन्दर्भ में, शब्दाद्वयवाद के प्रमुख सिद्धान्त, शब्दविवर्त की प्रक्रिया की व्याख्या की गयी है। ज्ञातव्य है कि, आधुनिक विज्ञान में विद्युत् तथा वैद्युतिकीप्रक्रम का आधार मूलकणों में अवस्थित ऋणाणुओं (इलेक्ट्रान) के विवर्तन को स्वीकार किया जाता है, जो नित्य, निरवयव तथा लघु

होने के कारण अन्य कणों की कक्ष्या में सहज प्रवेश करने के स्वभाव वाले होते हैं। समस्त ब्रह्माण्ड में तैरते हुए ऋणाणुओं को कृत्रिम पद्धति से ग्रहण करके यथेष्ट रूपनिष्पादन तथा क्रियासञ्चालन ही वैद्युतिकीविज्ञान का उपयोगितापरक प्रयोजन है। रेडियो, ध्वनिविस्तारक यन्त्र, दूरदर्शन चित्राङ्कन या चलचित्र का श्रवण अथवा दर्शन करते समय सम्भवतः सामान्य व्यक्ति के मन में यह जिज्ञासा अवश्य उत्पन्न होती होगी कि कैसे यह सम्भव हो पाता है कि, वही ध्वनि तथा वही रूप एक साथ अनेक स्थानों और काल में सुनाई तथा दिखाई देते हैं। इस विषय में पतञ्जलि के वाक्यपदीयम् के ब्रह्मकाण्ड में शब्दविवर्त का सिद्धान्त और अक्षर से जगत् के विवर्त की प्रक्रिया का अध्ययन किया गया है। सम्भव है कि, यह निबन्ध परम्परागत विद्वानों को हास्यास्पद प्रतीत हो अथवा पाश्चात्य विज्ञान के दर्पण में अपना रूपाकार देखने वाले 'आधुनिक विद्वान्' इस तथ्य पर विश्वास न कर सकें, किन्तु मेरा दृढ़ विश्वास है कि, यदि किसी व्यक्ति के मन में इस प्रकार विचार आ सकता है तो, निश्चय ही 'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्' का घोष करने वाले महर्षि पतञ्जलि ने अवश्य ही इस रहस्य का साक्षात्कार किया होगा।

आज व्यक्तित्व–विकास एक सामाजिक तथा मनोवैज्ञानिक समस्या के रूप में दृष्टिगोचर हो रहा है। फ्रॉयड का मनोविश्लेषणवाद आधुनिक मनोविज्ञान का महत्त्वपूर्ण सिद्धान्त स्वीकार किया जाता है, जो व्यक्तित्व की स्वरूपात्मक व्याख्या करता है, किन्तु भारतीय योग–मनोविज्ञान व्यक्तित्व के सर्वांगीण विकास के लिए मानसिक और शारीरिक स्वस्थता को आवश्यक मानकर उसके उपायों का उपदेश करता है। षष्ठ निबन्ध 'व्यक्तित्वविकासे योगमनोविज्ञानम्' में उक्त दृष्टि से 'योगश्चित्तवृत्तिनिरोधः' इस सूत्र के तात्पर्य को स्पष्ट किया गया है। सप्तम निबन्ध में ब्रह्माद्वैत तथा अष्टम निबन्ध में सृष्टिजगत् के मूल तत्त्वों के विषय में परम्परागत विचार को नवीन दृष्टि के साथ प्रस्तुत किया गया है। 'सर्वं खल्विदं ब्रह्म' की अवधारणा पर यदि सांस्कृतिक परिप्रेक्ष्य में विचार किया जाये, तो यह एक सार्वभौमिक तथा सार्वभौतिक समष्टि की अनुभूति है, जिसका आधार साम्यवाद और समाजवाद के रूप में अनुभव किया जा सकता है। मानववाद की पराकाष्ठा तथा 'आत्मवत् सर्वभूतेषु' की कलपना का मूल भी अद्वैत की यही भावना है। ब्रह्मसूत्रों का अद्वैतपरक भाष्य करने वाले आदि शंकराचार्य ने जिस प्रकार अपना सम्पूर्ण जीवन राष्ट्र के ऐक्य के लिए समर्पित किया, उससे यही स्पष्ट होता है कि, वे ब्रह्माद्वैत को मानववाद की समग्रता में देखना चाहते थे। दूसरी ओर भारतीय दार्शनिकों ने मूल तत्त्व के रूप में प्रायः तीन प्रत्ययों की चर्चा की है– ब्रह्म, प्रकृति तथा परमाणु। इनकी स्थापना करने वाले दर्शन क्रमशः वेदान्त, साङ्ख्य तथा

न्याय–वैशेषिक हैं। आधुनिक पाश्चात्य विज्ञान भी परमाणु को जगत् के मूलतत्त्व के रूप में स्वीकार करता है। 'मूलतत्त्वविमर्शः' शीर्षक निबन्ध में उक्त तीनों तत्त्वों के स्वरूपात्मक विवेचनापूर्वक इनमें समन्वय, अविरोध तथा चिन्तनगत विकास पर विचार किया गया है, जिसके अनुसार ब्रह्म मूलतत्त्व की निर्गुण, निरवयव, निर्विकल्प, सच्चिदानन्दरूप, अखण्ड, निरतिशय, अनादि, अनन्त अवस्था है, जिसका साक्षात्कार नहीं किया जा सकता है। 'ब्रह्मविद् बह्मैव भवति' वस्तुतः एक काल्पनिक विचार है; कयोंकि जहाँ तत्त्वतः अद्वैत हो जाता है, वहाँ अनुभूति नहीं होती है। प्रकृति वह बिन्दु है, जहाँ अव्यक्त के व्यक्तीभाव की परिस्थिति होती है, जो महद् आदि सूक्ष्म तत्त्वों को अभिव्यक्त करती है। उस बिन्दु का पूर्व बिन्दु 'अव्यक्त' होता है तथा पर बिन्दु 'विकार'। यदि तर्कपूर्वक विचार किया जाये, तो ब्रह्म के निर्गुण अथवा त्रिगुणातीत होने का अर्थ गुणों का अभाव न होकर उनका अव्यक्त होना है। प्रकृति वह अवस्था है, जब त्रिगुण 'व्यक्ति' की प्रक्रिया में होते हैं, किन्तु वे अन्यूनाधिक अर्थात् साम्यवस्था में होते हैं। परमाणु मूल तत्त्व की वह अवस्था है, जब व्यक्त हुए, अतः विक्षोभ के कारण भारहीन निरवयव तथा शान्त त्रिगुण व्यक्त पदार्थ की सृष्टि के उपादान हो सकते हैं। आधुनिक विज्ञान इन त्रिगुणों को न्यूट्रान, प्रोट्रान तथा इलेक्ट्रान के सङ्घटन के रूप में परिभाषित करता है। ज्ञातव्य है कि, ये तीनों घटक परमाणु के स्वरूप निर्धारित करते हैं। न्यायवैशेषिक परमाणुसंयोग से पदार्थजगत् की सृष्टि की व्याख्या करता है। इस प्रकार निमित्त कारण की अपेक्षा से ब्रह्म, उपादान कारण की अपेक्षा से प्रकृति तथा उपादानसामग्री की अपेक्षा से परमाणु को मूलतत्त्व के रूप में परिभाषित किया जा सकता है।

नवम निबन्ध में तन्त्रागमों में वर्णित शिव के आध्यात्मिक आधिदैविक तथा आधिभौतिक स्वरूप की चर्चा की गयी है। उल्लेखनीय है कि, शैवतन्त्रों में शिव को ही जगत् के उत्पत्ति, स्थिति तथा संहार का कारण स्वीकार किया गया है। दशम निबन्ध में भूगर्भ विषयक अनेक शास्त्रीय अवधारणाओं पर चिन्तन किया गया है, जिसके अन्तर्गत भूगर्भीय संरचना, सप्त पातालों की सप्त भूगर्भीय आवरणों के रूप में स्थिति, भूगर्भीय सम्पत् तथा उनके सन्दोहनविषयक सावधानियों की चर्चा की गयी है। एकादश निबन्ध में हिमालय की भूगर्भीय संरचना उसकी सम्पत् तथा उसके पर्यावरणीय संरक्षण की दृष्टि पर विचार किया गया है। हिमालय की उत्पत्ति, उसका क्रमिक विस्तार, मान, उच्छ्राय, उसकी आध्यात्मिक तथा भौतिक समृद्धि का प्रचुर वर्णन वैदिक संहिताओं, आरण्यकों, पुराणों, ज्योतिष तथा अन्य लौकिक वाङ्मय में प्राप्त होता है। उनके दर्पण में हिमालय का स्वरूप विहङ्गम दृष्टि से इस निबन्ध में प्रस्तुत किया गया है।

द्वादश निबन्ध में परम्परागत भारतीय कृषि में बीजवपन विषयक विचार किया गया है, जिसके अन्तर्गत उत्तम बीजों के गुण, वाप्य बीजों की संग्रहविधि, बीजरक्षण, बीजसंस्कार, विविध धान्यबीजों को बोने की विधियों, बीज बोने के समय तथा बीज बोने में निषिद्ध बातों पर विचार किया गया है। त्रयोदश निबन्ध में प्राचीन भारतीय कुल्यानिर्माण के सिद्धान्त तथा कृषि हेतु सेचन की दृष्टि से उनके प्रबन्धन पर विचार किया गया है। उसके अन्तर्गत कृषिविषयक, रक्षाविषयक, गृहनिर्माणविषयक तथा गृहोद्यान के संरक्षण हेतु कुल्या की उपयोगिता पर विचार करते हुए चार प्रकार की प्रचलित नहरों– नदीमातृमुखी, जलाशयाश्रित, कूपाश्रित तथा पर्वतपार्श्ववर्तिनी– के निर्माण तथा उनके निर्माण में अपेक्षित सावधानियों की चर्चा की गयी है। चतुर्दश निबन्ध 'भारतीया दण्डनीतिः' में दण्डसंहिता तथा दण्डप्रक्रिया के प्रयोजन तथा स्वरूप की चर्चा करते हुए भारतीय धर्मशास्त्र की दण्ड विषयक उद्‌भावनाओं को सन्दर्भित किया गया है। इसके परिप्रेक्ष्य में दण्ड के आधारभूत प्रयोजन– सामाजिक न्याय तथा धर्मसम्मत नैतिकमूल्यों की रक्षा के सम्बन्ध में प्रमुख स्मृतियों, अर्थशास्त्र तथा नीतिशास्त्रीय ग्रन्थों की चर्चा की गयी है। विशेषतः वर्तमान काल में, जब सम्पूर्ण विश्व के नैतिक प्रतिमान परिवर्तित हो रहे हैं, धर्म और नैतिकता के लिए संसार में अग्रणी भारत में अपराध और दण्ड की विषमतापूर्ण स्थिति उत्पन्न हो गयी है, शास्त्रोक्त दण्डनीति कहाँ तक उपादेय है, यह चिन्तन एवं विश्लेषण का विषय है।

विदुषी लेखिका ने प्रवाहपूर्ण देवभाषा में इन रोचक निबन्धों की रचना करके देवभाषा के भण्डार में श्रीवृद्धि की है। लेखिका का सम्पूर्ण जीवन और उसका समग्र परिवार ही संस्कृतभाषा तथा साहित्य के उन्नयन के लिए जो प्रयास करता रहा है उसके लिए वह साधुवाद का पात्र है। मैं लेखिका से उसके विद्यार्थीजीवन से ही परिचित रहा हूँ और उसके संस्कृतज्ञान तथा संस्कृति की श्रीवृद्धि के लिए उसके द्वारा किये जा रहे प्रयासों के लिए उसका प्रशंसक रहा हूँ। आशा है कि विद्वज्जगत् में 'मेधामन्थः' का समुचित समादर होगा।

16.IX.'05

– डॉ. जगदम्बा प्रसाद सिन्हा
पूर्व प्रोफेसर तथा विभागाध्यक्ष, संस्कृत एवं पालिप्राकृत भाषा विभाग,
लखनऊ विश्वविद्यालय, लखनऊ

# अनुक्रमः

# समाजोत्कर्षे वेदानां योगदानम्

उत्कर्षो नामोर्ध्वनयनम्। सामाजिकोत्कर्षस्याभिप्रायः सर्वविधं सामाजिकोन्नयनमिति वक्तुं शक्यते। स चोत्कर्षः समाजस्याध्यात्मिकभौतिकविकासयोः समन्वयेन सामञ्जस्येन च भवितुमर्हति, यतोह्याध्यात्मिकविकासः समाजस्य सांस्कृतिकनिधेः रक्षणार्थमावश्यकः; भौतिकविकासश्च वर्तमान–वैश्विकपरिवेशे स्थाननिर्धारणार्थं, भाविवंशजेभ्यश्च विकासपरम्पराप्रदानार्थमनिवार्यं भवति। अस्मिन् सन्दर्भे एतदवश्यं चिन्तनीयम् यत्केवलं भौतिकोपलब्धयः कस्यापि समाजस्य कृते स्थाय्युत्कर्षस्य दिशं प्रवर्तयितुं न क्षमन्ते। अथ च केवलमाध्यात्मिकविकासः सामाजिकव्यवहारे लोकयात्राप्रवाहे चैकाङ्गित्वस्य हेतुर्भवति। अनया दृशा सामाजिकोत्कर्षः निरन्तरं श्रेयसः श्रेयस्करं श्रेष्ठञ्च जीवनस्तरं जीवनदर्शनञ्चापेक्षते।

प्रसङ्गेऽस्मिन् वैदिकवाङ्मयस्योपादेयत्वचिन्तनात् प्रागुत्कर्षस्य स्वरूपं, स्वभावः, प्राप्यं, तदधिकृत्यापेक्षितः मानवीयप्रयत्नश्चेति विचारणीयाः बिन्दवः। तत्रोत्कर्षस्य स्वरूपं भावात्मकं क्रियायाः नैरन्तर्यसूचकञ्च भवति। 'दिक्' शब्दश्च ज्ञानविस्तारस्य बोधको भवति। तात्पर्यं खल्विदं यद् ज्ञानस्य विस्तारो यस्यां दिशि यावत्सीमापर्यन्तं यावदसन्दिग्धञ्च भविष्यत्युत्कर्षस्य मार्गः तावानेव सुनिश्चितोऽप्रतिहतः व्यापकश्च भविता। अत उत्कर्षाय ज्ञानपूर्वकम् क्रियासाधकत्वमपरिहार्यम्।

ज्ञानं भाव इति वक्तुं शक्यते यस्य विग्रहो विद्या इति ज्ञेयम्। विद्यायाश्च द्वैविध्यं मतं मनीषिभिः परा–चापरा च। उभयोरपि विद्ययोः प्रयोजनं पुरुषार्थसाधनम्। तत्र पराविद्या ब्रह्मविद्या परमपुरुषार्थमोक्षलाभे साक्षाद्हेतुः। अपराविद्या वेदोऽपि धर्मार्थकामसाधनपुरःसरं परोक्षतया मोक्षे हेतुः। मोक्षो नामानन्दस्वरूपो ज्ञानस्वरूपो वेति दुःखत्रयाणामात्यन्तिकक्षयरूप इति वा। वैयक्तिकपुरुषार्थसाधनदृशा निश्चयेनैव मोक्षस्याभिप्रायोऽपुनर्भव इति भवितुमर्हति, किन्तु सामाजिकस्तरे मोक्षः सर्वेषामपि प्राणिनां निरामयत्वं समृद्धिरार्तिनाशनञ्चेत्येव कल्पयितुं शक्यते। तच्च धर्मार्थकामानां समसेवनेन समन्वयेन च सम्भाव्यते। धर्ममूलौ ह्यर्थकामावित्युक्तम्। एतदेव सामाजिकोत्कर्षमूलं स्वभावश्च। सर्वेषां भद्रकल्पना तस्य प्राप्यम्। वैदिकस्वस्तिवाचनमन्त्रेष्वेषा विश्वमाङ्गल्यस्य भावना सन्निहिता वर्तते। अधोनिर्दिष्टे वैदिकमन्त्रे सर्वेऽपि 'क्रतवः' भद्राय कल्प्यन्ते–

**आ नो भद्रा क्रतवः सन्तु विश्वे।**

समस्तस्यापि वैदिकचिन्तनस्य तात्पर्यं लोकोत्कर्षे लोककल्याणे च पर्यवसितं तिष्ठति। इतोऽप्यधिकं महत्त्वपूर्णमेतद्वर्तते यद्वैदिकवाङ्मयं कस्यापि समाजविशेषस्य नापितु सर्वेष्वपि कालखण्डेषु सर्वेषामपि सामाजिकवर्गाणां समूहानां वोत्कर्षमन्त्रं निर्दिशति। यद्यपि केचिद्विशिष्टाः विधयः कमपि विशेषं सामाजिकपरिवेशं विशेषतो भारतीयपरिवेशमधिकृत्य निर्दिष्टाः सन्ति, किन्तु सिद्धान्ततः कस्य अपि सामाजिकपृष्ठभूमेः कृते सर्वमपि वैदिकवाङ्मयमुपादेयं वर्तते। क्रमेण तद्विषये केचिदुल्लेखा उपस्थाप्यन्ते।

**समाजस्याध्यात्मिकोत्कर्षे वैदिकवाङ्मयस्योपादेयत्वम्**

आध्यात्मिकोत्कर्षस्य घटकद्वयं वर्तते शारीरिकमनारोग्यं मानसिकं स्वास्थ्यञ्च। भोगायतनं शरीरं व्याधिमन्दिरमित्यप्युक्तम्। लोकानामाऽहार–विहारात्मकनियमेषु व्यवधानैः शारीरिकवैकल्यं भवितुमर्हति। यथा यन्त्रवैकल्ये कार्यसिद्धिर्न भवति तथैव शरीरवैकल्ये पुरुषार्थसिद्धिर्व्यवहीयते। अतः शारीरिकतन्त्रस्य संरचना, तदवयवानां सम्भाव्यविकाराः तन्निराकरणोपायाश्च ज्ञातव्याः साधनीयाश्च। वैदिकवाङ्मये संहितास्विन्द्रियाणामविकलतया दीर्घकालपर्यन्तं सक्रियतायाः कामना कृता–

**पश्येम शरदः शतम् श्रृणुयाम शरदः शतम्**
**जीवेम शरदः शतमदीनाः स्याम शरदः शतम्।**

उक्तमन्त्रे यावज्जीवनमदीनत्वकल्पनानारोग्यमनामयं वेत्येव। शरीरस्य विविधानामवयवानां रक्षोपायाः चिकित्सा च अथर्ववेदे वर्णिताऽस्ति। विविधपोषक–तत्त्वानामभावाज्जायमानानां रोगाणामुल्लेखः तदुपचारविधयश्च यजुर्वेदे उल्लिखिताः सन्ति। अथर्ववेदे अन्यान्यवनस्पत्योषधय औषधरूपेणोक्ताः सन्ति। विविध–रोगाणामुपचाराय मणीनामुल्लेखोऽस्ति। एवं प्रतीयते यत् वैदिककाले समाज एतेषामुपयोगो भवतिस्म। लोकानां दीर्घायुष्यञ्च साधारणमासीत्। सामान्यतयाऽयुः शतवर्षात्मकमिष्टमासीत्। शतवार्षिकजीवनस्य रहस्यं निरन्तरं कर्मशीलताऽस्ति। ईशावास्योपनिषदि 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति वचनेऽस्ति किञ्चिद् विशेषं वक्तव्यम् यस्य फलमुक्तमन्त्रस्य द्वितीयपङ्क्तौ दृश्यते–

**'एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे।'**

निरन्तरं कृतकर्मा नरो निर्लोभो भवति, यतोहि तस्य प्रवृत्तिः कर्मपूर्वकमर्जनाय भवति। अथ च निर्लोभभावना एकतः सामाजिकसाम्यभावनां जनयति अपरतोऽति–

सङ्ग्रहस्य मनोवृत्तिं नियन्त्रयति। एवं मानवः शरीरस्य शक्त्यनुसारमावश्यकतानुसारञ्च कर्म करोति। नैव निष्क्रियो भूत्वान्यायाधर्माभ्यां धनार्जने प्रवर्तते न चातिशयकर्मशीलो भूत्वा शरीरधर्मानपि तिरस्करोति। अयमेव **'न कर्म लिप्यते नरे'** इत्यस्याभिप्रायः।

वर्तमानकाले प्रायः द्विविधाः जनाः दृश्यन्ते। प्रथमे तावत् भोगमात्रमेव जीवनलक्ष्यं मन्यमानाः येन केनापि प्रकारेणाल्पश्रमेणाक्रियमाणकर्माणो वाऽपरेषां भागमपहृत्य तद्भोगे सङ्कोचं न कुर्वन्ति। इतरे भोगपरायणा उत्कर्षसाधकाः स्पर्धायां धावमानाः केवलमर्जने रताः दृश्यन्ते। अर्जितस्य भोगाय तेषां सामर्थ्यं समयश्चैव न विद्येते। उभेऽपि स्थिती सामाजिकोत्कर्षे बाधिके भवतः। अतो वैदिकसन्देशम–वधार्य शारीरिकक्षमताभौतिकोपलब्ध्योश्च मध्ये समतोलनमावश्यकरूपेण स्थापनीयम्। उपनिषदोऽपि शरीरधर्मस्य रक्षणार्थं विविधमुपदिशन्ति। पञ्चकोशात्मकेन जीवेनान्नमयकोशः प्रथमं रक्षणीयः। छान्दोग्योपनिषद्यारुणिः 'श्वेतकेतुं' व्यावहारिकरूपेण शिक्षयति यच्छरीरधर्मरक्षणं विनाऽधीतज्ञानमपि विस्मर्यते। अतः सामाजिकोत्कर्षाय वैयक्तिकदायित्वं निश्चेतुम् शारीरिकविकासः स्वास्थ्यञ्चावश्यकीये।

अध्यात्मस्य द्वितीयं घटकं मनो वर्तते। उक्तं हि योगवाशिष्ठे यत् **'मन एव मनुष्याणां कारणं बन्धमोक्षयोः'**। तात्त्विकदृशा मनः सर्वत्र सृष्टिकारणत्वेन गीतम्। सामाजिकस्तरे मन उत्कर्षपरम्परायां पूर्वकालिकविचारान् संयोज्य वर्तमानवैचारिक–सङ्घटनस्य सूत्रं घटयति। समाजस्य मानसिकस्तरं यावत्परिधिं साम्यं बिभर्ति तावती एवोन्नतिर्भवितुमर्हति। मानसिक–बौद्धिकव्यापकत्वं, समदिशि समाजस्य सामूहिकचिन्तनञ्चोत्कर्षयात्रां सरलीकरोति, यतोहि तत्र लक्ष्यं निश्चितं भवति, सर्वेषां मनःसु सर्वसहत्वं सर्वहितभावना च भवति।

ऋग्वेदस्य निम्नोद्धृते प्रसिद्धे मन्त्रे समनस्त्वस्यादर्शः सहभावनायाः पराकाष्ठां प्राप्नोति–

**समानी व आकूतिः समाना हृदयानि वः।**
**समानमस्तु वो मनो यथा वः सुसहासति।।**

किन्तूक्तभावनायाः व्यवहारः तदैव कर्तुं शक्यते, यदा मनः स्वस्थं भवेत्। मनसः लक्षणमेव सङ्कल्पवत्त्वमित्युक्तम्। अतएव वैदिकवाङ्मये मनःस्वास्थ्यस्य मूलमन्त्रः शिवसङ्कल्पः उक्तः। तदधिकृत्य शिवसङ्कल्पसूक्ते मनसो विभवं विश्लेषयन् ऋषिः मनसः शिवसङ्कल्पे नियोजनं प्रार्थयति। इन्द्रियाणां नियामकं मनः शिवसङ्कल्पं सदेव विषयेषु यथायोग्यमिन्द्रियाणि नोदयित्वा सामाजिकव्यवस्थायां जनाना–मिष्टयोगदाननिर्धारणे क्षमते।

एवं समाजस्याध्यात्मिकोत्कर्षस्य सिद्धिः सामाजिक–संरचनायाः स्वस्थसमष्टिसाधनतया भवितुमर्हति। स्वस्थसमष्टिश्च सुखदुःखे कर्तव्याकर्तव्ये धर्माधर्मे

लाभालाभे समष्टिहितचिन्तनेनैव भवितुं शक्यते। वैदिकवाङ्मये भूतं भव्यञ्चेति सर्वं पुरुष एवेति (ऋग्वेदः पूरुषसूक्तम् / २) मतम्। पुरुष एव पुरुषार्थसाधकः। अर्थसिद्धिश्च कर्ममूला इति वैदिकमतम्। सामाजिकोत्कर्षाय विहितकर्मणां साधनं निषिद्धानाञ्च कर्मणां त्यागोऽपेक्ष्यते। सर्वब्रह्मण्यस्य भावना त्यागपूर्वकं भोगभावनां पुष्णाति।

## समाजस्य भौतिकोत्कर्षे वैदिकवाङ्मयस्योपादेयत्वम्

समाजस्य भौतिकोत्कर्षः पाञ्चभौतिकोपभोग्यविषयाणां मूलरक्षणपुरःसरं समर्द्धनमिति वक्तुं शक्यते। उद्भूतमेधासमन्वितो मानवो यत्किञ्चिदप्यात्मनः परिवेशे पश्यति तस्योपभोगाय प्रवर्तते। अनन्तान्युपभोग्यवस्तूनि प्राकृतिकरूपेणोपलब्धानि किन्तु तांस्तान् पदार्थानाहृत्य परिष्कारपुरःसरं सामूहिकरूपेणोपभोगाय वितरणमेव भौतिकोत्कर्षस्य मूलम्। किन्तु तस्मादपि पूर्वं तत्तत्पदार्थानां स्वरूपज्ञानं, तेषां प्राकृतिकभाण्डाराणां ज्ञानं, तेषां विविधिसंस्कारः, गतक्षयानां तत्त्वानां पुनःपूरणविधीनां ज्ञानञ्चेति सर्वमावश्यकम्।

अनया दृशा वैदिकवाङ्मये विविधविज्ञानानि निदर्शितानि यान्यङ्गीकृत्य समाजः भौतिकोत्कर्षपथ्यव्याहतगत्या प्रयातुं शक्नोति। उपनिषत्साहित्ये मूलतत्त्वानां ज्ञानं, तेषामापेक्षिकानुपातः तात्त्विकसङ्घटनं तत्त्वैः पदार्थसंरचना–क्रम इत्यादि चिन्तनं विस्तृतरूपेण कृतमस्ति। एवं सृष्टिविज्ञानमनन्तब्रह्माण्डपर्यन्तं सृष्टेः विस्तारश्च भौतिकविज्ञानस्य क्षेत्रविस्तारायालम्।

वैदिकसंहितासूर्जासंसाधनं धातुविज्ञानं जलविज्ञानम् चिकित्साविज्ञान–मरण्यसम्पद् पर्वतसमृद्धिः अस्त्रशस्त्रनिर्माणोपयोगविधिः अदेवमातृका देवमातृकाश्च कृषिविधयः खनिशाशास्त्रं, ज्योतिर्विज्ञानं, सामाजिकव्यवस्थाऽर्थशास्त्रमित्याद्युपलभ्यते।

ऋग्वेदस्य प्रथमे मन्त्रेऽग्नितत्त्वस्य पुरोहितत्वेन स्तुतिः कृताऽस्ति –

**अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्।**
**होतारं रत्नधातमम्।।**

अग्निः न केवलं प्रथमं रूपवद्भूतमस्ति अपितु प्राणदायिनी ऊर्जा पाकशक्तिः पावकत्वञ्चाग्निना एव लभ्यते। वर्तमानयुगे यदा सामाजिकोत्कर्षमानदण्डेषूर्जाशक्तेः विकासः प्रामुख्येन गण्यते, वैदिकाग्निविज्ञानस्य ज्ञानमुपयोगि भवितुमर्हति।

समस्ते ब्रह्माण्डेऽसङ्ख्याः भौतिकसंरचनाः पिण्डाश्च दरीदृश्यन्ते। पृथिव्याः पृष्ठे गर्भे चानन्ता सस्यसमृद्धिः खनिजतत्त्वानि च निक्षिप्तानि सन्ति। एतेषां ज्ञानमुपयोगश्च सामाजिकोत्कर्षायावश्यकम्। अथर्ववेदे पृथिव्याः स्वरूपं बहुभाषाभाषिणां बहुधर्माचारिणाञ्च मानवानामावासत्वेन कल्पितम्–

**जनं बिभ्रती बहुधा विवाचसं नानाधर्माणं पृथिवी यथौकसम्।**

अथर्ववेद १२/१/४५

सा पृथिवी नानावनस्पत्योषधीः बिभ्रती अग्निगर्भा सप्तधातूनामाकरैः भूषितास्ति। वाजसनेयसंहितायां हिरण्य–अयस् –श्याम–लोह–सीस–त्रपु इत्येते धातवः मताः। अयसः भेदद्वयमिष्टं कृष्णायस् लोहायश्च। भूमेः एतान् धातून्निष्कास्य तेषां द्रुतीकरणादिसंस्कारेणोपयोगयोग्यीकरणाय वैदिक–ऋक्षूल्लेखोऽस्ति। ध्माता द्रविता इत्यादयो धातुशिल्पिनः तत्कालीने समाजे आसन्। यथाऽधोनिर्दिष्टमन्त्रेण ज्ञायते–

**उपध्मातमेव धमति शिशीते ध्मातरो यथा।**

ऋग्वेदः ५/४/५

**अयो न देवा जनिमा धमन्तः।**

ऋग्वेदः ४/२/१७

ऋग्वेदे (१०/१०१/५–७, १०/७/४५) कूपकुल्यादीनां निर्माणोल्लेखः सेचनयन्त्रस्य चोल्लेखोऽस्ति। एवमेवायोनिर्मितरथचक्राणामन्येषाञ्च अस्त्रशस्त्राणा–मुल्लेखोऽथर्ववेदे प्राप्यते।

एतदतिरिच्य सामाजिकोत्कर्षस्य कृते सामाजिकी व्यवस्था पारस्परिक–सम्बन्धाश्चोत्तरदायिनो भवन्ति। तदनुसारं वैदिक–वाङ्मये कर्मानुसारं यस्याः वर्णव्यवस्थायाः स्वरूपं निर्दिष्टं तेन निश्चयेनैव मानवसंसाधनस्य सर्वाधिको लाभः सामाजिकोन्नयनाय प्राप्तुं शक्यते। वर्तमानसमाजे कार्यविभाजने यथापेक्षितशारीरिक –बौद्धिक–अभिवृत्तिगतक्षमतायाः विचारः प्रायः न क्रियते। व्यावहारिकस्तरे नैतिकताया अभावोऽस्मिन् विषये महत्वपूर्णः कारकः प्रतीयते। वैदिकसमाजे शारीरिकबौद्धिक–क्षमतानुसारमेकस्यैव परिवारस्य सदस्या पृथग्वर्णीया भवितुमनुमता आसन् यथावश्यकं चान्यवर्णस्य कार्यमपि सम्पादयितुमर्हा आसन्। परस्परम् द्वेषरहिताः सौमनस्यभावेन सभासमित्योः सदस्यानामैकमत्यमुत्कर्षाय आवश्यकं मतम्। अथर्ववेदे भावनेयं स्पष्टीकृता–

**सभा च मा समितिश्चावतां प्रजापतेर्दुहितरौ संविदाने।**
**येना सङ्गच्छा उप मा स शिक्षाच्चारु वदानि पितरः सङ्गतेषु।**
**विदमते सभे नाम नरिष्टा नाम वा असि।**
**ये ते के च सभासदस्ते मे सन्तु सवाचसः।।**

अथर्ववेदः ७/१२/१–२

अपि च–

**सर्वे वदन्ति सहासा गतेन सभासाहेन सख्या सखायः।**

ऋग्वेद १०/७१/१०

सामाजिकोत्कर्षाय राज्ञः सत्यनिष्ठत्वं लोकरञ्जनञ्चावश्यकं भवतीति ऋग्वेदस्यानेन मन्त्रेण द्योतते–

**राजा न सत्यः समितीरियानः।**

ऋग्वेदः १/१२/८

समाजस्य भौतिकोत्कर्षाय मानवसंसाधनस्य सामाजिकजनानां राज्यशासकानाञ्च महद्दायित्वं भवति। वैदिकयुगः शिक्षायाः स्वर्णकाल इति वक्तुं शक्यते। छान्दोग्योपनिषदि ऋग्यजुःसामान्यथर्वणमितिहासपुराणं वाकोवाक्यं देवविद्या ब्रह्मविद्या भूतिविद्या नक्षत्रविद्या सर्पदेवजनविद्या पृथिवीवाय्वाकाशपातालविद्याः तेजः (रत्नम्)–देव–मनुष्य–पशु–तिर्यक्–तृण–वनस्पति–इत्यादिभ्य आरभ्य धर्माधर्म–सत्यानृतसाध्वसाधुहृदयज्ञाहृदयज्ञान्नरसादि यावत् सर्वं विज्ञानमुक्तम्–

**विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदं सामवेदमथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यराशिं दैवनिधिम् वाकोवाक्यमेकायनम् देवविद्यां ब्रह्मविद्यां भूतिविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यां दिवं च पृथिवीञ्च वायुं चाकाशञ्चापश्च....विज्ञानेनैव विजानाति विज्ञानमुपास्वेति।**

छान्दोग्योपनिषद् ७/१

अद्य मानवोऽन्तरिक्षस्य सीमानमुल्लङ्घ्यैकेनैव पदेन लोकत्रयं लङ्घयितुं कृतप्रयत्नो दृश्यते। अस्यामवस्थायां विविधक्षेत्राणामन्योऽन्यसम्बद्धज्ञानस्यावश्यकता भवति। वस्तुतः समस्तविषयाः अक्षरे व्योमनि निषीदन्ते सर्वाः शक्तयस्तत्र वरीवर्तन्ते। ततः तेषां विवेकपूर्णग्रहणस्य आवश्यकता भवति।

**ऋचो अक्षरे परमे व्योमन्यस्मिन् देवा अधि विश्वे निषेदुः।**

ऋग्वेदः १/६४/३६

एवं सामाजिकाभ्युदयाय ये केऽपि पक्षाः सम्भाव्याः, सर्वेष्वपि वैदिकवाङ्मये स्पष्टः विचारः कृतः। वेदस्य वेदता एव तस्यानन्तज्ञानवत्त्वे मता–

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।**
**एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता।।**



## वैदिकदेवतानां वर्षोपकारकत्वम्

आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति वचनेन वेदानां कर्मपरत्वं सिद्धयते। कर्मणो द्वैविध्यं स्वीकृतमिष्टापूर्तभेदेन। तत्रेष्टं वैदिकं पौर्तिकञ्च बहिर्वैदिकं मतम्। इष्टकर्माणि तत्तत्प्रयोजनसिद्धये विशिष्टपद्धत्या कृतानि कर्माणि भवन्ति। वस्तुत इष्टकर्मणां मुख्यं प्रयोजनं योगो ( अप्राप्तेः प्राप्तिः ) भवति पूर्तकर्मणां मुख्यं प्रयोजनं क्षेमसाधनं भवति। अस्मिन्नर्थे वैदिकयज्ञेषु विशेषत इष्टयागेषु प्रीयमाणाः देवता अभीष्टप्रदानं कुर्वन्तीति ऋषीणामभिमतम्। वैदिकदेवतानां देवत्वं तेषां दानप्रवृत्तिवत्त्वाद्दीपनत्वाद् द्योतनत्वाद् द्युस्थानीयत्वाद्वा भवतीति यास्काचार्यः (निरुक्तम्–७/१५) । कस्यचिदपि मन्त्रस्य ऋषिदेवताछन्दसां वैशिष्ट्येन तस्य विनियोगः क्रियते। मन्त्रार्थज्ञानं देवतायाः स्वरूपज्ञानानन्तरमेव भवति। मन्त्रार्थविदेव तन्निहितं विज्ञानं तस्येष्टसाधनतां च ज्ञातुमर्हति। उक्तं हि बृहद्देवतायाम्–

**वेदितव्यं दैवतं हि मन्त्रे–मन्त्रे प्रयत्नतः।**
**दैवतज्ञो हि मन्त्राणां तदर्थमधिगच्छति।।**
**तद्विदां तदभिप्रायानृषीणां मन्त्रदृष्टिषु।**
**विज्ञापयति विज्ञानं कर्माणि विविधानि च।।**

बृहद्देवता–१/२–३

अपरत्र वेदार्थदीपिकायाम् ( २/५ ) उक्तं यत्साररूपेण मन्त्रेषु येन वाक्येन यत्प्रतिपाद्यं वस्तु सा देवता। एताः देवताः स्वयंप्रकाशाः प्रकाशकाश्च भवन्ति किन्तु यजमानः यादृग्देवेभ्यः करोति तादृगेव देवाः तस्मै कुर्वन्ति। यथोक्तमैतरेयब्राह्मणे–

**यादृगिव वै देवेभ्यः करोति तादृगिवास्मै देवाः कुर्वन्ति।**

( ऐतरेयब्राह्मणम् ३/६पूनासंस्करणम् )

अतएव वाजसनेयसंहितायामुक्तम्–

**देहि मे ददामि ते नि मे धेहि नि ते दधे।**

वाजसनेयसंहिता– ३/५०

एकैकस्य तत्त्वस्य प्रकाशका अनेके देवाः। एकं तत्त्वं कार्यवशाद् बहुधा

बहुरूपेषु वा स्तूयते। उक्तं हि ऋग्वेदे–

**इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।**
**एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः।।**

ऋग्वेदः १/१६४/४६

वेदेषु देवतारूपेण द्युस्थानीयान्यन्तरिक्षस्थानीयानि पृथिवीस्थानीयानि च तानि–तानि भौतिकतत्त्वानि स्मृतानि येषामनुक्षणं लोकानामुपकारकत्वं दृश्यते। द्युस्थानस्याधिष्ठाता सूर्योऽन्तरिक्षस्याधिष्ठाता इन्द्रः पृथिव्याश्चाधिष्ठाताऽग्निर्मतः।

जलं प्राणिनां प्राणभूतं तत्त्वं, न तद्विना जीवनं सम्भाव्यते। अन्नमपि जलमूलम्। वनस्पतीनामपि जीवनं जलाश्रितमेवातः पृथिव्यामुपलब्धं जलं क्वचिदुपयोगेन क्षयं मा गम्यादित्यर्थं वैदिकर्षिभिः विहितेषु सर्वेष्वपि यज्ञेषु प्रदत्तस्य हविषः परिणामतया जलवृद्धिः तत्प्राप्तिश्च सुनिश्चिता आसीत्। द्युलोक आदित्यः वृष्टेः कारणं भवत्यन्तरिक्ष इन्द्रो वृष्टिजलस्य प्रेरको भवति, पृथिव्याञ्चाग्निः सूक्ष्मरूपेण जलस्य वाहको भवति। मरुदादयो देवास्तेषां सहायकाः भवन्ति। एवं प्रायः सर्वा अपि देवताः प्रत्यक्षेणाप्रत्यक्षेण वा पृथिवीवासिभ्यः जलदानायैव प्रार्थ्यन्ते। अथ च सर्वा अपि देवताः हविर्दानजलवर्षाजलादानैर्वा सम्बद्धाः भवन्ति। यथोक्तं ऋग्वेदे–

**मूर्धा भुवो भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन्।**
**मायाममू तु यज्ञियानामेतामपो यत्तूर्णिश्चरति प्रजानन्।।**

ऋग्वेदः १०/८८/६/१

एवमेवैक एवाग्निः कदापि वरुणो भवति कदाचिच्च समिद्रूपो मित्रो भवति–

**त्वमग्ने वरुणो जायसे यत्त्वं मित्रो भवसि यत्समिद्धः।**

ऋग्वेदः– ५/३/१/१

**स वरुणः सायमग्निर्भवति स मित्रो भवति प्रातरुद्यन्।**

अथर्ववेदः १३/३/१३

इमाः देवताः पृथक्–पृथग्वैशिष्ट्यवत्योऽपि गुणक्रियासु कथमपि सम्बद्धाः दृश्यन्ते। उदाहरणार्थं सैव देवता वृत्ररूपमेघेषु स्थितान् जलपरमाणून् यदा विखण्डयति तदा इन्द्र इत्युच्यते, मेघानन्तरिक्षे संप्रेरयन् स एव वायुर्भवति, मेघगर्जनं समुत्पाद्य स एव वातसङ्घातं जनयन् रुद्रो मरुद्रूपश्च भवति। वस्तुत एतासां देवतानां पृथगभिधानेन स्तुतयः कर्मपृथक्त्वाद्भवन्ति। यथा चोक्तम्–

**कर्मपृथक्त्वाद्धि पृथगभिधानस्तुतयो भवन्ति।**

बृहद्देवता (२/२४/७०) सर्वानुक्रमणी (२/१३)

यद्यपि द्यव्यन्तरिक्षे पृथिव्यां चेति त्रिष्वपि लोकेषु स्थिता देवताः वृष्ट्यै भूमिकामावहन्ति तथापि वर्षाया अन्तरिक्षे भवात्तत्रस्थाः देवता अनया दृशा प्रमुखाः भवन्ति। पृथिव्यामग्निरन्तरिक्षे वायुरिन्द्रो वा द्यवि चादित्योऽधिष्ठातृतया तिष्ठन्ते। यथा ऋग्वेद उक्तम्–

**सूर्यो नो दिवस्पातु वातो अन्तरिक्षात्।**
**अग्निर्नः पार्थिवेभ्यः।**

ऋग्वेदः१० / १५८ / १

तिस्रोऽपि प्रधाना देवताः स्वसहायकैः सह वैश्विकजलचक्रं सृजन्त्यस्तस्य विविधरूपाणि प्रकाशयन्ति। मूलतो हिरण्यगर्भसूक्ते 'कस्मै देवाय हविषा विधेम' इत्यादिमन्त्रैः हिरण्यगर्भरूपं जलं प्रजापतिर्वा हविषा विधेय उक्तः। एवं स्पष्टीभवति यद्धविर्दानेन यज्ञसम्पादनं कृत्वा जलमाप्तुं शक्यते। प्राकृतिकक्रियारूपेण वां मानवीयप्रयासेन वा वर्षाजलस्य सृष्टिः वृद्धिश्चान्तरिक्षे क्रियते। तत्र वर्षायाः प्राकृतिकोऽधिष्ठाताऽदित्यो भवति यः सूर्यरूपेणाभिव्यक्तो भूत्वा स्वरश्मिभिः प्रथमं सर्वतो भौमं जलं वाष्परूपेणाहरति तत्रेन्द्रः सोमो वरुणः पर्जन्यः मरुद्विद्युदादयस्तस्य वाष्पस्य जलरूपेण रूपान्तरणं कृत्वा भूमिवासिभ्यः प्रयच्छन्ति। अथ च यज्ञाग्निना हव्यवाहत्वेन यद्धूमोऽन्तरिक्षे नीयते तस्मादभ्रं जायतेऽभ्राच्च वृष्टिर्भवति। यथोक्तं शतपथब्राह्मणे–

**अग्नेर्वै धूमो जायते धूमादभ्रम् अभ्राद्वृष्टिः।**

शतपथब्राह्मणम्–५ / ३ / ५ / १७

अस्तु। वेदेषु वृष्ट्युपकारकाणां देवानां स्वरूपं संक्षेपेणात्रोपस्थाप्यते।

### १. अग्निः

जातवेदस् इध्म तनूनपादपान्नपादित्यादिनामभिः प्रसिद्धोऽग्निः प्रमुखतया पृथिवीस्थानीया देवता। अग्निरेव प्रथमं व्यक्ततत्त्वमित्येतस्मात्कारणात्पुरोहित इत्युच्यते। यथा ऋग्वेदस्य प्रथममन्त्रेणैव ज्ञायते– 'अग्निमीळे पुरोहितमि'ति। असौ हविर्भुगित्युक्तः, यः शिखारूपजिह्वाभिः हविर्भुक्त्वा धूममार्गेण हविषः सारभूतं रसमव्यक्तरूपेणान्तरिक्षं प्रापयति। विनाऽग्निना यज्ञकार्यं हविर्दानञ्च न विधातुं शक्यते। अग्निरेवान्तरिक्षे वैद्युतज्योतिरूपादित्यो वैश्वानरश्चेति रूपद्वये राजते। तत्र पार्थिवोऽग्निः धूमं वायौ प्रवेशयति। तत्र सूक्ष्मभूतं जलं मेघरूपो भवति, यस्य तुलना गर्भेण कृता। अस्यामवस्थायां जलं हिमीभूतं करकादिरूपेण वा तिष्ठति। वायुगर्भे स्थितमेतज्जलं विद्युद्वाहकं भवति। यदा मरुद्गणाः सञ्चरणेन मेघान् संप्रेरयन्ति, तदा जलस्था विद्युत् स्ववाहकेन जलेन

घर्षणं प्राप्य तडिद्रूपोऽग्निर्भवति। सङ्घर्षणेन व्यक्तोऽग्निस्तडिद्रूपेण सङ्घनितस्य जलस्य द्रवीभावे मेहनस्वभावानां मेघानामिन्द्रस्य च साहाय्यं करोति। वर्षाकाले विद्युद्दाम गर्जनं चैतस्मादेव भवति यत्सङ्घर्षणेन विस्फुटिताः विरलीभूताश्च जलकणाः वैद्युताग्निना तप्यमानाः वर्षारूपेण प्रवहन्ति। जलेन स्पृश्यमानेयं विद्युद्यावत्कालं जलपरमाणुभिः संपृक्ता तिष्ठति तावत्कालं विद्युदेव जलस्य सुचालकत्वं भजते। काष्ठादेः पार्थिवपदार्थस्य सम्पर्केण सा विद्युदग्निरूपेण रूपान्तरिता भवति, जलशामका च भवति। एवमग्निः जलस्य कारणं वाहकं चोभयरूपेण वृष्टेः मूलं भवति।

**वायुः—**

अन्तरिक्षे व्याप्यत्वाद्वायुरन्तरिक्षस्याधिष्ठातृदेवतारूपेण स्मर्यते। इन्द्रा रुद्रो मरुद्गणाश्च वायोरेव विविधगुणान् प्रकाशयन्ति। प्राकृतिकसौरचक्रानुसारेण द्वादशमासात्मके वर्षे वर्षर्तौ मुक्तजलाः मेघाः लघूभवन्ति। पुनः शरदृतोः आरभ्य वायुः सर्वास्वपि दिक्षु स्थितस्य भौमजलस्यौषधिभ्यो वनस्पतिभ्यो जलागारेभ्यश्चाहरणेऽन्तरिक्षे च तन्निक्षेपे सूर्यस्य साहाय्यं करोति। वायुस्तत्राष्टौ मासान्गर्भमिव जलं दधाति। वस्तुतो यदा सूर्य उत्तरायणे तिष्ठति तदा सूर्यस्य प्रचण्डतापेन वायोरायतनं वर्धते, येन जलकणाः परस्परं सङ्घट्टन्ते परिणामतो विद्युज्जायते 'मेघोदरसंस्थितं' जलं च द्रवीभूत्वा वायुनैव पृथिव्यां संप्रेर्यते। ( निरुक्तमीमांसा– पृ० ३२४ )। अन्तरिक्षे वायुः जलस्य धारको भवति यथोक्तं 'तस्मिन्नपो मातरिश्वा दधाति', मातरिश्वा वायारेव नामेति।

**वरुणः—**

वरुणः यद्यपि पौराणिककाले पार्थिवजलानामधिष्ठातृत्वेन स्तूयते, किन्तु वैदिककालेऽसावन्तरिक्षस्थानीयदेवतारूपेण स्वीक्रियतेस्म। वरुणः वायोः आवरणात्मकं वारणात्मकं वा तत्त्वं वर्तते। अन्तरिक्षे गर्भमिव स्थितं जलमवरोध्य पतनाद् वारयत्यसावतो वरुण इत्युच्यते। सप्तसिन्धुः, जलानां स्वामी, जले च गतिमान् वर्तते वरुणः। (ऋग्वेदः– ८/६६/१२, ७/४६/३, १/१६१/१४, ७/८३/१) त्रिष्वपि लोकेषु व्याप्तस्यास्य मूलस्थानं द्युलोकोऽस्ति। तत्र च सूक्ष्मोष्मारूपेण जलं प्रतिष्ठापयन् वरुण एव सूर्यांशुभिर्गृह्यमाणं जलं वृष्टिपर्यन्तमन्तरिक्षेऽवरोधयति। वस्तुतोऽवरोधस्यावस्थैवेयमिति। अनया दृशाऽस्य महत्त्वपूर्णं योगदानं वर्तते वृष्टौ। रूपेऽस्मिन् व्याप्यवृत्तित्वाज्जलस्य स्वरूपवान् भवति वरुणः। निरुक्तकार उदानवायुरूपेणास्य व्याख्यां करोति। आधुनिका एतं हाइड्रोज़न इति तत्त्वतया स्वीकुर्वन्ति।

**रुद्रः–**

अन्तरिक्षे वायुनाऽऽहृतं वरुणेन च सङ्गृहीतं जलं यदा वृष्टियोग्यं भवति तदा मेघाः जलभारेण परिपक्वगर्भ इव लक्ष्यन्ते। यथाऽसन्नप्रसवा स्त्री पीडया क्रन्दते तथैव वर्षितुमाकुला मेघाः रावं कुर्वन्ति गर्जन्ति विद्युच्च द्योतते। वातसङ्घातेनान्तरिक्षे विप्लव इव सञ्जायते। इयमेवावस्था रुद्र इत्युच्यते। रुद्रः वर्षसूचकं तत्त्वमिति वक्तुं शक्यते। वैदिकर्षिभिः रुद्रो जलरूपगर्भस्य सुखविमोकार्थं स्तुतः।

**इन्द्रः–**

यदा रुद्रः स्वोत्पातेन मेघगर्जनं दामद्योतनं वातवेगं च जनयन् सर्वा अपि दिशः कम्पायत इव, वर्षायाः सङ्केतः प्राप्यते किन्तु वर्षा न भवति, साऽवस्था वृत्र इत्युच्यते। इन्द्रः वज्रेण ( विद्युता ) वृत्रं हत्वा वर्षाजलं विमुञ्चति। एवं वृत्रहननं जलवर्षणमन्यानि च पराक्रमपूर्णानि कार्याणीन्द्रः करोति। इन्द्रो वरुणादिदेवताभिः सहैको वा स्तूयते। सः सोमपा सोमप्रियश्चोक्तः। सोमो वैदिकवाङ्मये जलवर्धकद्रव्यविशेषतया वर्णितः, यस्य पानेनेन्द्रस्य बलवृद्धिर्भवति। एवं प्रतीयते यद्यज्ञे आहुतिरूपेण प्रयुक्तः सोमो यदा धूममार्गेणान्तरिक्षं प्राप्नोति तदा तस्य गुणवत्त्वाद्वृद्धं गुणवदुत्तमं च जलं वर्षारूपेण प्राप्यते। अस्यान्ये नामनी वृत्रहन् नमुचिद्विडित्येते उक्ते, ते च वर्षया सम्बद्धे स्तः। वृत्र इति मेघस्य साऽवस्था यस्यां जलमोको न स्यात्। एतस्मादेव न मुच्यतेऽनेनेति नमुचि इत्यर्थे, वर्षवारणाच्च वृत्र इत्युच्यते। ( ऋग्वेदः– १/५३/६,–७, ७/१६/५ ) वृत्रस्य रूपमहिवद् भवति, यो जलमावृत्य सर्पवत्तिष्ठति। ( ऋग्वेदः– ४/१६/२, ५/३०/६ ) अयं वृत्रो मेघमण्डलस्यावरको वायुरेव प्रतीयते। इन्द्रवृत्रयोर्युद्धं प्रतीकात्मकमलङ्कारतया दर्शितम्। यथार्थत इयं वर्षकारकाणां मेघानां वायोश्च प्राकृतिकी अवस्थेति वक्तुं शक्यते। यथोदाहृतं निरुक्तमीमांसायाम्–

**न त्वं युयुत्से कतमत्नाहर्न तेऽमित्रो मघवन्कश्च नास्ति।**
**मायेत्सा ते यानि युद्धान्याहुर्नायं शत्रुं न नु पुरा विवित्से।।**

उद्धरितम् निरुक्तमीमांसा पृ०– ३५१

वस्तुतो युद्धमेतज्जलवाय्वोः गुरुत्वसङ्घर्षः प्रतीयते। यदा मेघस्थं जलं सूक्ष्मार्द्रतावस्थायाः जलबिन्दुतया परिवर्तते तदा जलीयवेगो मेघमण्डलमुद्भेत्तुं प्रयतते, बहिर्मण्डलीयो वायुश्च बाह्याघातेन नोद्यते। एवं बलद्वयस्य सङ्घर्षे सति मरुद्रुद्रादिभिः सूक्ष्मावर्तरूपैः वाय्वाघातैः परस्परं सङ्घषर्णेन च महदूर्जा जन्यते हिमरूपो वृत्रश्च क्षरणं प्राप्नोति। केचिद्विद्वांसो हेमन्तर्तुं वृत्रपदवाच्यं मन्यन्ते, यतो हि हेमन्तर्तुपर्यन्तमादित्येन वायुना चाहृतं रसरूपजलं मेघाकृतिर्भवति। अन्तरिक्षे वरुणेनावरुद्धस्य जलस्य वर्तमानत्वाद्वृत्रस्य वृत्रत्वम् भवति। यथोक्तं शतपथब्राह्मणे–

स यद्वर्तमानः समभवत्तस्माद्वृत्रः।

शतपथब्राह्मणम्– १/६/३/९

अपरमुखेन विद्वांसो वृत्रेन्द्रवृत्तान्ते मन्यन्ते यद्धेमन्त एव वृत्रः, स च हिमाधाररूपेण जलमवरोधयति। वसन्तकालीनो ग्रीष्मकालीनो वा सूर्य एवेन्द्रः स च हिमीभूतं जलं द्रवीकृत्य नदीप्रस्रवणादिषु पूरयति। एवं सूर्यः शीतर्तुरूपं वृत्रं हन्ति जलं च मुञ्चति। (निरुक्तममीमांसापृ०–३५६)

**पर्जन्यः–**

ग्रीष्मकाले तप्ता धरती तापपीडितश्च जडचेतनः वर्षागमनकाले तृप्ता आनन्दिताश्च भवन्ति। वनस्पत्योषधयः क्षेत्राण्यारामवाटिकाः प्रहर्षन्ते, नदीनद–जलाशयकूपवापीनां शुष्कत्वं विनश्यति। सर्वत्रार्द्रत्वं सर्वं रसमयं करोति। सुखदो वातो वाति। इयमवस्था पर्जन्य इत्युच्यते। पर्जन्य एषोऽन्नस्य कारणं भवति। पर्जन्यस्य सम्बन्धो मण्डूकैरपि भवति यतोह्यस्यामवस्थायां पृथिव्याः गर्तेभ्यो मण्डूकाः बहिरागत्य स्वशब्दैः प्रसन्नतां सूचयन्ति।

**अपान्नपात्–**

यथा नाम्नैव प्रतीयते यदियं देवता जलजन्योऽग्निः। अन्तरिक्ष–स्थानीयोऽपान्नपादृग्वेदस्य तन्नाम्नि सूक्ते पञ्चदशमन्त्रेषु स्तुता। अन्यत्रापि यत्र–तत्राग्निसन्दर्भे जलप्रसङ्गे वाऽपान्नपात् स्तुतः। ऋग्वेदस्य द्वितीये दशमे मण्डले च विनेन्धनं जलेषु दीप्यमानोऽग्निरेष उक्तः। भौतिकरूपेणाकाशीया विद्युदियमिति वक्तुं शक्यते। आकाशीया विद्युदेकतो वर्षाजलं वेगवत्प्रवाहार्थं प्रेरयत्यपरतश्चातिशयत्वे सति विनाशकारकं विप्लवमपि जनयति। कदाचिच्च सहस्राभी विद्युच्चुम्बकीयधाराभिः भूमिं प्राप्य विनाशस्य कारणं भवति।

अपान्नपाद्वस्तुतो जलीयोर्जेति प्रतीयते। परमशक्तिशालिनीयमूर्जाऽव्यक्ततेजसां पुञ्जतया राजते या जलकणानां परस्परं घर्षणेन जायते।

**सविता–**

इन्द्रस्य बलप्रेरकरूपेण सविता स्मृतः। ऋग्वेद एकादश सूक्तानि सर्वथा सवितासम्बन्धीन्येव सन्ति। अन्यत्रास्फुटतया सवितुर्वणनं प्राप्यते। षूङ् प्राणिगर्भविमोचने धातोः व्युत्पन्नोऽयं 'सविता' शब्दः तद्बलस्य पर्यायो भवति येन प्राणिनः प्राणवन्तो भवन्ति। निरुक्तकारेण यास्केन सविता ' सर्वस्य प्रसविता' इत्युक्तः ( निरुक्तः ७/३१, १०/३१ )। अयं सविता पार्थिवो माध्यमिकः द्युसम्बन्धी ( औत्रमिकः )

चोक्तः। अस्य बलेनैव पृथिवी स्वाक्षेऽन्तरिक्षे स्थिरा तिष्ठति। ऋग्वेदस्य दशमे मण्डले (१०/१४६/१) सविता वर्षाप्रेरक उक्तः। अन्तरिक्षेऽस्याऽरेणवः पन्था उक्ताः–

**ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे।**

ऋग्वेदः– १/३५/११

इमेऽरेणवः पन्थाः पृथिवीमण्डलस्यापरकक्ष्यामभि मण्डलीकृतो मार्गः प्रतीयते। दिवः पृथिवीमण्डलं प्रविश्य जलानि काम्यं सस्यादिकं च प्रदातुमागच्छति सविता। यथोक्तम्–

**अस्मभ्यं तद्दिवो अद्भ्यः पृथिव्यास्त्वया दत्तं काम्यं सध आगात्।**

ऋग्वेदः–२/३८/११

एवं प्रतीयते यत्सविता सौरपरिमण्डलेऽन्तरिक्षे पृथिव्या अपरकक्ष्यायां स्थिता गुरुत्वाकर्षणशक्तिरिति यस्य बलेनान्तरिक्षादिन्द्रादिना मरुत्साहाय्येन प्रेर्यमाणं जलं भूमितले वर्षरूपेण सस्यौषधीनामुत्पादकं भवति, येन च बलेन पृथिवी सर्वानपि प्राणिनः धारयति।

**मरुद्गणाः–**

मरुद्गणाः मुख्यतो वातप्रवातजनकाः विद्युद्द्योतकाः देवता उक्ताः ये वृष्ट्या पृथिवीमाप्यायमानं कुर्वन्ति (ऋग्वेदः– १/१६/७,८,३६,५ य ८/७/२६ १/८५/१)। उक्तेषु त्रिष्वप्यर्थेषु यास्कः मरुद्गणानां शब्दनिर्वचनं कुर्वन् तास्ताः विशेषताः स्पष्टीचकार–

**मरुतो मितराविणो वा मितरोचिनो वा महद्द्रवन्तीति वा।**

निरुक्तम्– ११/१३

मरुतां जनकाः रुद्रगणाः मताः। रुद्राणां स्वरूपमपि मरुदिवास्ति। अन्तरं तत्रैतद्यद्रुद्रा वृद्धाः गर्जनतर्जनं कुर्वन्ति मरुतश्च वेगवन्तः सञ्चरन्तः भयानक–प्राकृतिकस्थितिमुत्पन्नां कुर्वन्ति। एवं मरुतां सम्बन्धो वातेन भवति रुद्राणां च मुख्यः सम्बन्धो मेघैर्भवति।

**अश्विनौ–**

युग्मरूपेण स्मृतावश्विनौ द्युस्थानीयदेवतासु प्रमुखौ।' **पूर्वीरश्नन्तावश्विना**' इत्यस्मिन् ऋग्वेदीये (८/५/३१) मन्त्रेऽश्विनोः स्वरूपं स्पष्टीकृतमस्ति। यास्कस्य मतानुसारेण–

**अश्विनौ यद्व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषाऽन्यः।**

निरुक्तम्– १२/१

रसः नीहाररूपं जलमेव। युग्मरूपेणावस्थितावेतौ शतपथब्राह्मणे द्यावापृथिवीरूपेण दुर्गाचार्येणाहोरात्रतया शौनकेन च सर्वरूपमयौ मतौ। यास्काचार्योऽर्धरात्र्यनन्तरमन्तरिक्षे पृथिव्याञ्च नीहारप्रसारकावरुणोदयकाले च ज्योतिःप्रसारकावेतौ मन्यते। वृष्ट्याऽश्विनोः भूमिकाऽहर्निशं जलादानेन तत्प्रसारेण च भवत्येव। रात्रौ नीहारपातेनौषधय उषसः पूर्वमेव पुष्टाः प्रहृष्टाश्च भवन्त्येतस्मादेव कारणाद् लोका अपि प्रातः प्रहृष्टाः गतश्रान्तयश्च दृश्यन्ते। उक्तं हि निरुक्तकारेण–

**यद्वृष्टे ओषधय उद्यन्ति प्राणिनश्च पृथिव्यां तदश्विनो रूपम्।**

निरुक्तम्– ६/३६

**आदित्यः–**

द्युस्थानीयदेवतास्वादित्यः प्रमुखतमः। सविता भगः सूर्यः पूषा विष्णुः वैश्वानरो वृषाकपिः अजएकपात् केशिन् इत्यादीन्यस्य गुणाभिधायकानि नाभानि प्रोक्तानि। अयमूर्जास्रोतः प्रचण्डः तापमयश्चादित्यो लोकत्रय ऊर्जाप्रदानाद्व्यतिरिक्तमष्टौ मासान् ( कार्तिकतः ज्येष्ठपर्यन्तम् ) पृथिव्याः रसकर्षणं करोति। मध्याह्नकाले स्व–तीक्ष्णरश्मिभिरन्येषु कालेषु चापरैः रश्मिभिः सर्वतो वाष्परूपेण पार्थिवजलमाहृत्य पुना अन्तरिक्षे तत्तद्देवतानां सूत्रधारत्वेन वृष्टिं कारयति।

एवमिन्द्रो वायुरग्निः मरुतोऽपान्नपाद्रुद्राश्विनावादित्यादीनां देवतानां सङ्घटनेन वर्षा भवति। एतासां देवतानां वृद्ध्यर्थं यज्ञेषु ताभ्यस्ताभ्यो देवताभ्यः हविःप्रदानेन वर्षाजललाभाय निरन्तरं प्रयत्नरता आसन् यजमानाः। यथाकालमपेक्षितपरिमाणे पोषकमायुष्यं प्रदूषणरहितं वर्षामवाप्तुं कश्चित्सुनियोजितो, वैज्ञानिकः, शाश्वतिको विधिः ऋषीणामासीदयम्। अद्यतनीये जलसङ्कटस्य काले सुधीमानवैः वैज्ञानिकैश्च तत्तद्भौतिकतत्त्वरूपाः देवताः प्रचुरवर्षायै यज्ञैः प्रीणनीयाः वर्धनीयाश्च।



# वेदेषु विद्युच्चिन्तनम्

ऊर्जाविकासस्य वर्तमानयुगे विज्ञानस्य सर्वाधिकमहत्त्वपूर्णं कार्यं विश्वस्मिन् व्याप्तां मूलामूर्जां तच्छ्रोतांसि च सङ्गृह्य विविधेषु प्रकल्पेषु तस्योपयोगो वर्तते। ऊर्जैव वस्तुतो विश्वस्य मूला शक्तिरिति वक्तुं शक्यते। पदार्थेषु प्राणरूपेण प्रतिष्ठिता सा यदा द्योतते, प्रकाशते च, तदा विद्युद्रूपा भवतीत्यस्ति वस्तुस्थितिः। अथवा एतद्वक्तुं शक्यते यद्यत्किञ्चिदप्यूर्जाप्रसूतं व्यावहारिकोपयोगाय बहूद्देश्यीयक्षेत्रेषु प्रवर्तते लोके, तत्र विद्युच्छक्तिरेव हेतुः। अतएव तस्यैव विद्युतः सन्धाने स्व–स्वक्षेत्रानुरूपं वैज्ञानिकाः अभियन्तारश्चिकित्सकाः योगिनः साधकाश्च विकासस्य प्रथमचरणादेव स्वस्वपद्धत्या संलग्नाः आसन्। आधुनिके विश्वस्मिंस्तु विविधैः कृत्रिमविधिभिः विद्युतमुत्पाद्य ( सङ्गृह्य ) वैज्ञानिकैरनुक्षणमेव दैनन्दिनजीवनादारभ्य विकासस्य पराकाष्ठां यावन्मानवजीवनस्य विद्युदपेक्ष्यत्वं सर्वथा साधितमित्यस्माभिः सर्वथा अनुभूयते दृश्यते च। विद्युद्धारया नियन्त्रितानि गृहोपकरणानि मानवजीवनं सरलं सुखदं सुविधाजनकं च कुर्वन्तः सन्ति। यातायातसाधनेषु पुरीष्याग्निजन्योर्जा (पेट्रोल), बृहत्तरासु निर्माणीसूत्पादान् प्रकल्पयतां यन्त्राणां सञ्चालने प्रयुज्यमाना शुद्धा विद्युदूर्जा, गृहेषु प्रतिक्षणं प्रयोगार्थं प्रकल्प्यमाना वाहकतन्त्रनियन्त्रिता जलादिनोत्पादिता वितरिता च जलविद्युदूर्जा, विश्वस्तरे बृहत्तरेषु वैज्ञानिकशोधकेन्द्रेषु ब्रह्माण्डीयरहस्यानुद्‌घाटयत्सूपग्रहेषु, युद्धाद्युद्देश्येन निर्मितेष्वायुधेषु व्यवस्थीयमाना परमाणूर्जा, किं बहुना सर्वत्रैवोर्जोपयोगे विद्युच्छक्तिरेव प्रतिष्ठते। किं बहुना? चुम्बकीयस्पर्शमाध्यमेन शरीरस्थायाः विद्युतश्चिकित्सापर उपयोगोऽपीदानीं प्रायशः प्रचलितः। एवं वक्तुं शक्यते यदाधुनिकविश्वस्य विकासयात्राया अनवच्छिन्नमार्गत्वेन सकलानामपि भौतिकसांस्कृतिकोन्नतीनामुत वाऽध्यात्मिकविकासस्यापि मूलाधारत्वेन राजते विद्युत्। समग्रतया यत्किञ्चिदपि सूक्ष्मतः स्थूलपर्यन्तं दृश्यमानं ज्ञायमानमुपभुज्यमानं चास्तीह लोके तद्विद्युत एव माहात्म्यम्। इदानीं मानवजीवनस्य पर्यायत्वेन प्रतिभाति विद्युदूर्जा।

का नाम सा विद्युदूर्जा इत्येतस्मिन् विषये आधुनिका वैज्ञानिकाः परमाणुषु विद्यमानानां कणानामावेश–प्रवाहतया विद्युतः लक्षणं प्रतिपादयन्ति। द्वयो आवेशयोर्मध्ये

याऽकर्षणविकर्षणप्रवृत्तिर्भवति तदनुसारेण बाह्यपथा प्रवर्तितं बलं ( विद्युद्वाहकबलम्) प्रवाहेऽस्मिन् हेतुर्भवति। आवेशप्रवाहस्याकर्षणगुणस्य परिणामतया विद्युच्चुम्बकत्वं जायते। आवेशप्रवाहस्य नियतकालिक आवृत्तिक्रम एव विद्युद्धारा इत्युच्यते, या विद्युद्वाहकबलेन स्वर्णताम्रादिषु माध्यमेषु नीयमानोर्जां क्षरति। तां च विद्युज्जन्यामूर्जां स्वेच्छया विविधेषु विषयेषु कल्पयन्ति विज्ञानपराः लोकाः। सर्वस्यैतस्योपक्रमस्य विकासः पाश्चात्यैरूनविंशतितमायां शताब्द्यां कृतमिति स्वीक्रियते साम्प्रतिकैः वैज्ञानिकैः। किन्त्वस्या अवधारणायाः मूलं किमेतदनुसन्धेम चेत्तर्हि वेदा एवान्तिमं शरणमिति पश्यामः। तत्र ह्यन्याऽन्येषु मन्त्रेषु क्वचिद्विद्युतः स्वरूपं क्वचित्तस्याः व्यापकत्त्वं, प्रभावस्तदुपयोगस्य लाभहान्यादयश्चोक्ताः। भौतिकतत्त्वेष्वपि चैतन्यदर्शनमस्माकं मनीषिणामृषीणां प्रवृत्तिः, अतस्तैः पदे–पदे मानवकल्याणाय तानि स्तुतानि प्रार्थितानि च। विद्युदपि तेषु तत्त्वेष्वन्यतमं तत्त्वं विद्यते।

क्षेत्रेऽस्मिन् वेदानां किञ्चिदृणमस्ति वर्तमानविश्वस्मै यतोहि सर्वप्रथमं विद्युच्छब्दस्तत्स्वरूपञ्च वैदिकवाङ्मय एव प्राप्यते। वैदिकमतानुसारेण विद्युदियमग्नेरेव रूपमिति ज्ञेयम्। अग्निरेव प्रथमं व्यक्तमहाभूतत्वात्पुरोहित इत्युक्तः यथा 'अग्निमीळे पुरोहितम्' इत्यादिप्रथमर्चैव ज्ञायते। सैव सर्वेषां यज्ञकर्मणामाश्रय इति। उल्लेखनीयमस्ति यद्वैदिकं जीवनं यज्ञप्रधानमासीत्। सर्वेषामपीष्टानां साधनं यज्ञ एवासीत्। प्रत्येकं यज्ञप्रतिपादनार्थमग्निचयनं विहितमासीत्। अग्निचयनं वस्तुतः यज्ञवेदिकाया निर्माणस्य तस्यामग्निस्थापनस्य च काचिद्विशिष्टा पद्धतिर्भवतीति वक्तुं शक्यते, यस्यामेकतः पञ्चचितीः यावद्विशष्टविधिना निर्मिताभिरिष्टकाभिः यज्ञानुसारेणेष्टकर्मानुरूपं च छन्दःश्येनकङ्कादिचितीनां विशिष्टा रचना विधीयते, तदनुसारञ्च तत्तत्कर्म सम्पाद्यते इति। अग्निचितीत्यपरपर्यायत्वेन प्रसिद्धमग्निचयनं बह्वाकारकं बहुप्रकारकञ्चोक्तम्। उखानामिष्टकादीनाञ्च विशिष्टः परिमाणः, चितिषु, विशेषतः प्रथमायां रुक्मादिधातुस्थापनविधानमेतस्यां दिशि ध्यानमाकर्षयति यत्स्वर्णादिधातवः विद्युत उत्तमचालकाः भवन्ति। आधारे तत्स्थापनेन वैद्युताग्नेः आवेशः सुकरो भवितुमर्हति। एवमग्निचयनमाग्नेयोर्जाया सङ्ग्रहविधिरित्येकः पक्षोऽग्निचयनविज्ञानस्य। अथ च सर्वमपि वैदिकं कर्म मानवस्याभ्युदयायैवेति मत्वा विद्वद्भिः वैदिककर्माणि सकामश्रेण्यामुक्तानि। विद्युदूर्जासन्दर्भेऽग्निचयनस्यास्य सम्बन्धप्रख्यापनात्प्राक् विद्युतोऽर्थः, स्वरूपं, सङ्घटनं, प्रभेदाः, कृत्रिमविधिना तन्निर्माणमित्यादिविषयाः विचारणीयाः।

वैदिकवाङ्मये विविधशब्दैः विद्युतो विविधरूपाणि प्रख्यापितानि। तत्र विद्युद्, गौः, तडित्, पर्जन्यः, वैश्वानरः, स्तनयित्नुः, माध्यमिकं ज्योतिः, दिद्युद्, रुद्रः,

अशनिः, इन्द्रः, अपान्नपात्, कबन्ध इत्यादिशब्दानां व्याख्यया विद्युतः तत्सम्बन्ध्यूर्जायाश्च स्वरूपमवबोधयितुं शक्यते। अत्रोल्लेखनीयं यत् विद्युदियमग्नेः सूक्ष्मरूपं यस्याः मूलमुत्पत्तिस्थानमादित्य इत्युक्तः। दिवि सूर्यरूपेणान्तरिक्षे वायुरूपेण पृथिव्याञ्चाग्निरूपेण विद्युदियं राजते। ज्योतिःस्वरूपात् परमात्मनः जौतानि त्रीणि ज्योतींष्येतानीति। आधुनिकाः यामावेशपदेन ज्ञापयन्ति सोऽजैव जगत्प्रकाशिनी विद्युदिति। साऽन्तरिक्षात् साक्षात्पृथिवीं प्रविशति। वैदिकमतानुसारेण विद्युत् पुरुषोऽस्ति। 'पुरि शेते इति पुरुष' इति व्युत्पत्त्या विद्युत्किमपि पार्थिवं शरीरं माध्यमं वाश्रयते। चेतनरूपेण तत्प्राणिनां पञ्चकोशात्मकं शरीरं भवति, जडरूपेण च सुवर्णताम्रादिविद्युच्चालकधातुशरीरं भवितुमर्हति। यथोक्तं निम्नोद्धृते मन्त्रे–

**सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि।**
**नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रमत्।।**

उक्तमन्त्रे विद्युतः सर्वव्यापकत्वं पृथिव्यां प्रवेशगुणत्वं चापि प्रतिपादितम्। सर्वे निमेषाः तत्रैवावस्थिताः। एवमाकाशादिमहाभूतानामायतनम् विद्युदिति वक्तुं शक्यते। छान्दोग्योपनिषद्याकाशे व्याप्यत्वाद्विद्युद् ब्रह्मेत्युक्तम्। वायौ विद्युदिन्द्ररूपेणाग्नौ ज्वालारूपेण जलेऽपान्नपाद्रूपेण पृथिव्यां चोष्मारूपेण तिष्ठति। एवं विद्योतते इति विद्युदिति व्युत्पत्याऽसावेव प्रकाशनस्य हेतुः। क्वचिदियं सौरोर्जारूपेण प्राणिभ्यः प्राणान् जीवनं च यच्छति, क्वचिद्वर्षारूपेण पृथिव्यामुर्वरत्वाधानमन्नपाकं च कृत्वा प्राणिनः पोषयति क्वचिदग्निरूपेण हव्यवाहरूपं बिभर्ति। एतानि विद्युतोऽघोररूपाणि, यानि विश्वमेतदाह्लादयन्ति पोषयन्ति च। अथाशनिः वज्रः रुद्र इत्यादीनि विद्युतो विनाशकारीणि घोररूपाणि, तेभ्यः रक्षार्थं वैदिकवाङ्मये भूरिशः प्रार्थना कृता। विद्युत ऊर्जात्मकस्वरूपस्य विश्लेषणार्थमधोनिर्दिष्टानि तत्त्वानि व्याख्येयानि।

**वैश्वानरः–**

भारतीयमेधाया आधारस्तम्भभूतासूपनिषत्सु प्रत्यगात्मनोऽन्यतमपादरूपेण यस्याध्यात्मिकस्वरूपं प्रोक्तं तस्याधिभौतिकस्वरूपं वैश्वानरोऽग्निः, यस्य सम्बन्ध उत्तममध्यमज्योतिर्भ्यां भवतीति। उत्तमज्योतिरादित्यः मध्यमज्योतिश्चान्तरिक्षस्थो वायुः। उभावेतौ विश्वानरावित्युच्येते। ताभ्यां जातोऽग्निः वैश्वानर इत्युच्यते। वैश्वानरः क्षितीनां नाभिरुक्तः–

**वैश्वानर नाभिरसि क्षितीनाम्।**
**विश्वस्य नाभिं चरतः ध्रुवस्य।**

ऋग्वेदः– १०/५/३

अपि चोक्तम्–

**विश्वानरावेते उत्तरे ज्योतिषी। वैश्वानरोऽयं यत्ताभ्यां जायते।**

निरुक्तम्– ७/६/२२

उत्तममध्यमज्योतिर्भ्यां कथं जायतेऽसौ वैश्वानरोऽग्निरित्येतस्मिन् विषये निरुक्तकारो यास्कः कथयति–

**कथं त्वयमेताभ्यां जायते इति। यत्र वैद्युतः शरणमभिहन्ति। यावदनुपात्तो भवति मध्यमधर्मैव तावद् भवति, उदकेन्धनतः शरीरोपशमनः। उपादीयमान एवायं सम्पद्यत उदकोपशमनः शरीरदीप्तिः।**

निरुक्तम्–७/६/२३

विवृत्तिकार उक्तनिर्वचनस्य भाष्ये वैद्युताग्नेः यत्स्वरूपं प्रतिपादयति तदाधुनिकविद्युतः परिप्रेक्ष्ये महत्त्वपूर्णं वर्तते। यथोक्तम्–

**वैद्युतः (अग्नेः) शरणं (गृहम्) (शरणं गृहं रक्षित्रोरित्यमरः) उपलक्षणमेतत् आश्रयमात्मनो दारु उदकमन्यद्वा दाह्यम् अभिहन्ति निहन्ति अभिगच्छति प्राप्नोतीत्यर्थः। यावदसौ अनुपात्तः मनुष्यैरस्पृष्टोऽपरिगृहीतो वा तावन्मध्यमधर्मा मध्यमस्येव धर्मोऽस्येति। यदसौ उदकेन्धनः उदकेनेन्धते दीप्यते रसस्वभावेन। शरीरेण काष्ठेनान्येन वाप्रतिहतमूर्तिः स्वभावकेन पार्थिवधातुबहुलेन उपशाम्यतीति उपशमनः। स एव मध्यमस्य (वैद्युतोऽग्नेः) धर्मः। तदेतत्स्थानं जात्यादिकृतं स्वभाव्यमहेतुकं प्रथमस्य (दिव्यस्य) ज्योतिषो धर्मो न भवति। स एव पुनः उपादीयमानः परिगृह्यमाण एव अयं पार्थिवोऽग्निः सम्पद्यते। कथम् ? उपात्तो हि मनुष्यैः स्वजातिधर्मं हित्वा पार्थिवधर्मं प्रतिपद्यते। यदसौ उदकोपशमनः उदकेनोपशाम्यति शरीरदीप्तिश्च भवति इति विपर्यस्तधर्मा न मध्यमादयं विश्वानरात्सञ्जायते तेनायं तदपत्यं भवति हि तद्धितार्थोपपत्त्या वैश्वानरः।**

निरुक्तविवृत्तिः ७/६/२३– पृष्ठ–३७७–३७८

**मध्यमवैद्युताग्नेः स्वरूपम्–**

मध्यमवैद्युताग्निः अन्तरिक्षे व्यक्ता विद्युदिति वक्तुं शक्यते। तस्याः स्वरूपावबोधकानि तत्त्वानि वैदिकवाङ्मये विविधशब्दैरुक्तानि। तेष्वन्यतमः स्तनयित्नुरिति। अयं वायोः कश्चित्प्रकारः। यास्कः मेघनामान्तर्गतं 'गौः' इति शब्दस्य निर्वचनं तादृश्याः मेघगर्जनायाः अर्थे करोति यत्र स्तनयित्नुः विद्यते। स्तनयित्नुः मेघाश्रितः सन् शब्दायते, मानवस्तस्माद् बिभेति। ततः स एव स्तनयित्नुः विद्युद्रूपो भूत्वा वर्षया पृथिवीमाच्छाद्य स्वं स्तनयित्नुरूपं विद्युद्रूपं चापाकरोति–

**अयं स शिङ्क्ते येन गौरमीवृता।**
**मिमाति मायुं ध्वसगं वधिश्रिता।**
**सा चित्तिभिर्निहिचकार हि मर्त्यं**
**विद्युद्भवन्ती प्रतिवव्रिमौहत्।।**

ऋग्वेदः– २/३/१६

विद्युतोऽपरं नाम तडिदिति प्रसिद्धम्। अपां च ज्योतिषां च मिश्रीभावकर्मणो वर्षकर्म जायते। यास्कः तत्रापामित्यस्यार्थः ' मेघान्तर्गतानां' 'ज्योतिषां च ' इत्यस्यार्थश्च वैद्युतानाम् इति मत्वा तस्य ज्योतिषो नाम तडिदिति स्वीकरोति–

**तेन हि वैद्युतेन ज्योतिषा मरुदावेष्टितेन इन्द्राख्योपताड्यमाना आपः प्रस्यन्दते। ( वर्षभावाय प्रकल्प्यन्ते ) –**

निरुक्तविवृत्तिः– पृष्ठ ६१

शाकपूणिराचार्यो विद्युतस्तडिद्रूपत्वं प्रतिपादयति, यथा यास्कः उद्धरति–

**विद्युत्तडिद् भवतीति शाकपूणिः। सा ह्यवताडयति दूराच्च दृश्यते।**

निरुक्तविवृत्तिः– पृष्ठः–६१

यथा च–

**त्वया वयं सुवृधा ब्रह्मणस्पतेस्पार्हा वसु मनु याददीमहि।**
**या नो दूरे तडितो यो अरातयोऽभिसन्ति जम्भयाता अनप्नसः।**

ऋग्वेदः– २/६/३०

अथ च–

**दूरे चित्सन्तडिदिवातिरोचसे।**

ऋग्वेदः– १/६४/७

विद्युतोऽपरं रूपमपान्नपादित्युच्यते। तडिदेव यदा परिणामं प्राप्य हिरण्यरूपा भवति तदा साऽपान्नपद्भवति। अपान्नपात् हिरण्यवर्णः हिरण्यसंदृग् हिरण्यदा सम्पत्तिदा चोक्तः –

**हिरण्यरूपः स हिरण्यसंदृगपान्नपात्सेदु हिरण्यवर्णः।**
**हिरण्ययात्परियोनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै।।**

ऋग्वेदः– २/७/२३

अस्य मन्त्रस्य ऋषिः गृत्समदः कुम्भेष्टकोपधानेऽग्निचयनेऽपान्नपाद्देवतायाः विनियोगं स्वीकरोति। अत्रापान्नपान्मध्यमस्थानीय आदित्यस्य पुत्र इत्युक्तः।

निरुक्तम्– ३/३/१६

तत्त्वमेतदनिध्मो जलस्यान्तः विद्यमानोऽग्निरुक्तः–

**यो अनिध्मो दीदयदप्स्वन्तर्य विप्रास ईळते अध्वरेषु।**
**अपान्नपान्मधुमतीरपोदा याभिरिन्द्रो वावृधे वीर्याय।।**

ऋग्वेदः– ७/७/२४

एवमपान्नपाद्वैद्युतोऽग्निरिति मन्तव्यम्। श्रुतिः प्रमाणमत्रेति साधयन् निरुक्तकारः मन्त्रमुदाहरति–

**समुद्रादूर्मिर्मधुमाँ उदारत्।**

ऋग्वेदः–४/५८/१

अथर्ववेदेऽपां पित्तरूपेण जले स्थिता योऽग्निः स्मृता सा विद्युदेव –

**अग्ने पित्तमपामसि।**

अथर्ववेदः–१८/३/५

**अपरत्राप्युक्तं यदापोऽग्निं गर्भरूपेण धारयन्ति–**
**या अग्निं गर्भं दधिरे.......आपः।**

तदेव–१/३३/१

विचारणीयं यत्किमस्त्येतदपां पित्तमिति। पित्तमग्नेर्विकार इत्युक्तः, येन शरीरमूर्जावान् भवति। एवमपां पित्तमूष्मारूपोर्जारूपा वा विद्युदिति वक्तुं शक्यते। जले स्थितस्यास्य वैद्युताग्नेः रूपद्वयमुक्तम्– घोरमघोरञ्चेति। तत्र घोरो विनाशकोऽघोरश्चोपयोगी भवति –

**यो आपोऽग्निराविवेश स एष यद्वो घोरम्।**

अथर्ववेदः– १६/१/८

अथ च–

**योऽप्सु अग्निः अति तं सृजामि म्रोकं खनिं तनूदूषिम्।**

अथर्ववेदः– १६/१/७

अत्र घोररूपस्यावेशः (आसमन्तात् वेशः प्रवेश इति) जलस्य विद्युच्चालक–गुणत्वमवबोधयति। चालकत्वञ्चाश्वनुप्रवेशो वा व्याप्तिर्वाऽशुगतिर्वेति वक्तव्यम्। अयं वैद्युताग्निः घर्मार्तानामन्नार्थिनीनां प्रजानामुपयोगायान्नहेतूदकं ददाति।

उक्तविवेचनेन विद्युतः जलसम्बन्धोऽवबोध्यते। तस्याः ग्रहणार्थमुपयोगार्थं वा रहस्यपूर्णशैल्या भाषया च वैदिकवाङ्मये गोपथब्राह्मणेऽग्निचयनस्य प्रसङ्गे घोरात्क्रूरात्सलिलादश्वानयनस्य तत्शमनस्य च चर्चा प्राप्यते–

**प्रजापतिः वेदानुवाच अग्नीनादधीय इति। तान् वागभ्युवाच अश्वो वै**

**सम्भाराणामिति। तं घोरात्क्रूरात्सलिलात् सरसः उत आनिन्युः। तान् वाक् अभ्युवाच– अश्वः शम्येत इति।**

गोपथब्राह्मणम्–पूर्वभागः– २/१८

अत्रोल्लेखनीयं यत्पदान्यनेकार्थानि भवन्ति। उक्तब्राह्मणे वेदशब्दः वेदविद्विद्वदर्थे प्रयुक्त इति प्रतीयते। अश्वानयनस्यैकोऽर्थो विद्युत्कर्षणपरः व्यज्यते। आशुगमनादश्व इति व्युत्पत्त्या जले गतिमती विद्युद्धाराऽश्व इति प्रतीयते तस्य शमनस्या–भिप्रायोऽग्निचयनस्य प्रसङ्गे विद्युतः सङ्ग्रह इति प्रतीयते। वाग्वेदयोः संवादेऽस्मिन् शंयुनाम्नाऽथर्वणऋषिणा आथर्वणकबन्धस्य पुत्रस्यामन्त्रणस्याख्यानं वर्तते। गोपथब्राह्मणे 'शंयु' इत्यस्य पदस्य निर्वचनं 'शान्तिमन्निश्चलब्रह्मवेत्ता' इति कृतम्–

**शंयुम्– कंशंभ्यां बभयुस्तितुतयसः** ( पाणिनिः ५/२/१३८ )
**शंयुस् मत्वर्थे सकारः पदत्वार्थः। शान्तिमन्तम्** ( आथर्वणम् )
**निश्चलब्रह्मवेत्तारं ( कबन्धस्य पुत्रम् )।**

गोपथब्राह्मणम्–पूर्वभागः– २०२/२/१०

जलविद्युतः सङ्कल्पनाया पोषिकेयं वैदिकी अवधारणा इति वक्तुं शक्यते। एवं तडिद्विद्युतः स्वरूपात्मकं नामापान्नपाच्चोपयोगितापरं नामेति वक्तुं शक्यते। एतानि रूपाण्यूर्जायाः लाभदायकरूपाण्यघोररूपाणि वा सन्ति। केचिद्रूपाणि हानिकराण्यपि भवन्ति। यथा विद्युतोऽन्यतरं नाम दिद्युदिति प्रसिद्धं वेदे। सैव वज्र इत्यप्युच्यते यथोक्तं निघण्टौ –

**दिद्युदिति वज्रनाम।**

निघण्टुः – २/२०/१

यदा विद्युदन्तरिक्षसकाशादवसृष्टा विमुक्ता वाऽशनिरूपा भवति तदा सा विनाशकरी भवति; अतः तस्याः रक्षार्थं रुद्रः प्रार्थ्यते–

**या ते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परि सा वृणक्तु नः।**
**सहस्रं ते स्वपिवात भेषजा मा नस्तोकेषु तनयेषु शेरिषः।।**

ऋग्वेदः– ५/४/१३

अशनेः स्वरूपं रुद्रं क्षतिकरञ्च भवति। यास्कः दिद्युत् इति शब्दस्य निर्वचने तस्याः त्रीन् गुणान् सङ्केतयति – द्यतिः, द्युतिः, द्योतनं च–

**दिद्युत् द्यतेर्वा द्युतेर्वा द्योततेर्वा।**

निरुक्तम्– ३/१०/१/७२

द्यतिः इति पदं दोऽवखण्डने धातोः व्युत्पन्नं विद्युतोऽवखण्डनगुणत्वं बोधयति।

द्युतिः द्यु अभिगमने इति धातोः क्विप्प्रत्यययोगाद्व्युत्पन्नं पदं, यस्यार्थः द्यौत्यभिगच्छति प्राणिन इति भवितुमर्हति। द्योतते इति पदं द्युत दीप्तौ इति धातोः क्विप्प्रत्यययोगाद् व्युत्पन्नम् तस्य चार्थः प्रकाशनम् इति निरुक्तकारस्याभिमतम्। त्रिष्वप्येतेष्वर्थेष्ववखण्डनं विखण्डनं वा विद्युदावेशस्य (electic charge) सङ्ग्रहदृशा महत्त्वपूर्णम् , यतोह्यवखण्डनयुक्त्यैव शुद्धविद्युन्निर्माण आवेशकणानां सङ्कलनं क्रियते। अस्य द्वितीयो गुणः प्राणिनां शरीरेषु विद्युदावेशस्य स्थितिं सूचयति, येन दिद्युतः विनाशकारिप्रभावाद्रक्षा सम्भवेत्। तृतीयोऽर्थ उपयोगपक्षेण सम्बद्ध इति।

एवमशनिरूपा दिद्युदाकाशाद्विमुक्ता तादृशी विद्युदुच्यते या विखण्डानाज्जायते, वर्षाकाले च क्षितिं प्राप्य प्राणिनः संप्रविशते। स्वरूपेण सा प्रकाशते च। अस्यामवस्थायां सा रुद्ररूपिणी भवति। अतः रुद्रः नम्यते ऋषिभिः–

**यो अग्नो रुद्रो यो अप्स्वन्तर्य ओषधीर्वीरुध आविवेश।**
**य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नम अस्त्वग्नये।।**

अथर्ववेदः– ७/८१/१

इन्द्रस्य चतुर्दशनामस्वेकं नाम विद्युदित्यप्युक्तम्। उल्लेखनीयं यदिन्द्रस्य रूपद्वयमुक्तम्– मरुत्वान् सहस्वान् च। तत्र मरुत्वान् इन्द्रः विद्युदेव। एवमन्तरिक्षे वायोः कानिचिद्रूपाणि विद्युतः स्वरूपनिर्णायकानि भवन्ति।

**अग्निचयनम्–**

बृहज्जाबालोपनिषदि उक्तम्– **'वैद्युदादिमयं तेजो '** इति।

बृहज्जाबालोपनिषद्–२/२

तद् द्विधोक्तम्:– सूर्यात्मकमनलात्मकञ्चेति। तत्र सूर्यात्मकं तेजो वैश्वानराग्नेः उत्तममध्यमज्योतिषोः स्रोतो भवत्यनलश्च जातवेदस्वरूपं पार्थिवं तेजो भवति। वेदेभ्यो जातत्वादसावग्निः यज्ञेन कल्प्यते ईळ्यते च। सर्वेष्वपि वैदिकेषु यज्ञेषु प्रथममग्निचयनस्य विधानं क्रियते। अग्निर्हि पुरोहितः यज्ञस्य देव इत्युक्तः ऋग्वेदे।

विद्युदूर्जोत्पादनसन्दर्भेऽग्निचयनस्य सिद्धान्तः द्रष्टव्यः। उल्लेखनीयमस्ति यद्यज्ञार्थमाग्नेयोर्जायाः चयनं सङ्ग्रहविस्तारौ च विशेषकर्मतया प्रोक्ताः। ब्राह्मणग्रन्थेषु बहुविधानामग्निचयनानामुल्लेखः प्राप्यते। तदर्थमुखानिर्माणं चितिसंरचना विशिष्टाकारप्रकारकाणामिष्टकानां निर्माणविधिः उपधानञ्चेत्यादिविषयाः काञ्चिद्विशेषपद्धतिमिङ्गयन्ति। याज्ञवल्क्येनाग्निचयनं कर्म विद्या चेत्युभयमिति मतम्–

**एषा हैव सा विद्या यदग्निः। एतदु हैव तत्कर्म यदग्निः।**

शतपथब्राह्मणम्– १०/४/३/९

कर्मदृशाऽग्नीनां चयनमग्निचयनम् । विहितयज्ञे गार्हपत्य–आहवनीय–आग्नीध्रीय– होत्रिय–प्रशास्त्रीय–ब्राह्मणच्छंसीय–पोत्रीय–नेष्ट्रीय–अच्छावाकीय–मार्जालीय–इत्याद्यग्नीनां विशेषसंरचनाविधिरग्निचयनमित्युच्यते। शतपथब्राह्मणे (७/१/१२, ४/१/२, ५/१/२ ), तैत्तिरीयसंहिताब्राह्मणे ( ५/१/४, ५/१/१०), कात्यायनसंहिताब्राह्मणे (१६–२०), कात्यायनश्रौतसूत्रे (११–१२) इत्यादिस्थलेषूक्तविवेचनं प्राप्यते।

विद्यारूपेणाग्निचयनं संवित्त्या चैतन्येन संधित्सया वा युक्तैः देवैः साक्षात्कृतमिति याज्ञवल्क्यः।

**ते यदब्रुवन् चेतयध्वम् इति, चितिमिच्छतेति वाव तदब्रुवन् यच्चेतयमाना अपश्यंस्तस्माच्चितयः।** शतपथब्राह्मणम्– ६/२/३/६

कठोपनिषदोऽवतरणिकायामाचार्यो शङ्करोऽपि "लोकादिर्ब्रह्मजज्ञो योऽग्निस्तद्विषयाया विद्यायाः...." इत्युक्त्वाऽग्निचयनं विद्येति स्वीकरोति। एताश्चितयः क्षुद्रचितिरूपेण महाचितिरूपेण वा प्रकल्प्यन्तेस्म। अग्निचयनम् ग्रामाद्बहिः लोकवसतिभ्यो दूरे क्रियतेस्मेत्युल्लेखः प्राप्यते। अत्रैतदप्युल्लेखनीयं यत्क्षुद्रचितीनां संरचनायां सुवर्णशकलानां ( रुक्म हिरण्यं वा ) जलस्य च प्रयोगो भवति। महाचितिषु च यथाविहितं मृन्मयी पश्विष्टका, हिरण्येष्टका, वानस्पत्येष्टका, अन्नेष्टका च प्रयुज्यते। कामनाभेदेन चेतव्यचितेः निर्माणस्य विधानमुक्तम्।

ऐतरेयमहीदासस्य मतानुसारेणाग्निचयने स्थितः पुरुषः ( परमसत्ता ) पृथिव्यन्तरिक्षद्युलोकाकाशजलौषधिवनस्पतिचन्द्रमादिषु सकलभूतेषु च तिष्ठति। एतदेव ब्रह्मेत्यभिधीयते (ऐतरेय आरण्यकम् ३/६/३)

अथर्ववेदस्याधोनिर्दिष्टे मन्त्रेऽग्नेः ब्रह्मरूपता उल्लेखिता–

**यो अग्नयो अप्स्वन्तर्ये वृत्रे ये पुरुष ये अश्मसु।**
**दिवं पृथिवीमन्वन्तरिक्षं ये विद्युतमनुसरन्ति।।**

अथर्ववेदः– ३/२१/१

अध्वर्यवोऽग्निरूपेण पुरुषमुपासन्ते, देवास्तमेवोर्जारूपेणोपासन्ते। कदाचिद् विशिष्टासु चितिष्वग्निरूपेणेयमूर्जा सङ्गृह्यते यस्या उपयोगो विविधेष्टसिद्धौ क्रियत इत्यनुमातुं शक्यते। वेदविद्यायां भूर्यध्यवसायं कुर्वतां विदुषां विज्ञानवतां ध्यानमेतस्मिन् विषय आकृष्टं भवति चेत्तर्हि चमत्कारपूर्णाः परिणामाः प्राप्तुं शक्यन्ते। अग्निचयने कदाचित् पार्थिवाग्निः साध्यते कदाचिच्च जलस्थाग्निः शम्या भवति यथा कबन्धस्य प्रसङ्गे उक्तम्। पार्थिवाग्नेः चयनं सर्वप्रथममथर्वणा ऋषिणा कृतमित्युल्लेखः ऋग्वेदे

प्राप्यते–

**अग्निर्जातो अथर्वणा।**

ऋग्वेदः– १/८३/५

अपि च–

**यज्ञैरथर्वा प्रथमः पथस्तते।**

तदेव–१/८३/५

**अथर्वा त्वा प्रथमो निरमन्थदग्ने।**

यजुर्वेदः– ११/३२

वेंकटनाथाख्यो विद्वान् ऋग्वेदस्यैकस्य मन्त्रस्यार्थनिर्वचने 'चित्रम्' इति शब्दस्यार्थं चयनीयमिति करोति, यस्य तात्पर्यमग्निचयनमूर्जाचयनं वा प्रतीयते।

कल्याण– सूर्याङ्कः– पृष्ठः– ३१

अग्निचयनं वस्तुतः रहस्यमयं विज्ञानं वर्तते, यस्याधिदैविकतात्पर्यमन्वीक्ष्याध्यात्मि–काधिभौतिकाभिप्रायेण तस्य सङ्गतिं साधयित्वाऽश्चर्यजनकान्यनुसन्धानानि सम्भाव्यन्ते। 'यज्ञ' शब्दस्यैकोऽर्थः सङ्गतीकरणमित्यपि भवति। अस्य सम्बन्धोऽग्नेः उपयोगपक्षेणास्ति यत्र विविधानीष्टानि साधयितुं विविधविधाश्चितयो निर्मीयन्ते। वेदविज्ञाने निरतैः अधिकारिभिः विद्वद्भिः विषयेऽस्मिन् व्यामोहं त्यक्त्वोदारचित्तेन गम्भीरतयाऽनुसन्धान–सरणिः प्रकल्पनीया। सन्दर्भेऽस्मिन् द्रष्टव्यं यदेतदग्निचयनं किञ्चित् सामूहिकं प्रकल्पमिति वक्तुं शक्यते, यस्मिन् चतुर्वर्णानामपि जनानां साहाय्यमपेक्ष्यते। यथोक्तं यजुर्वेदे–

**ब्रह्मणे ब्राह्मणं क्षत्राय राजन्यं मरुद्भ्यो वैश्यं तपसे शूद्रं धर्माय सभाचरं रूपाय मणिकारं शुभे वपं पवित्राय भिषजं प्रज्ञानाय नक्षत्रदर्शनं मर्यादायै प्रश्नविवाकं पुष्ट्यै गोपालम् इरायै कीनाशम् आलभते।**

यजुर्वेदः– ३०/५

एवमेव बहवः प्रसङ्गाः शोधविषयत्वेनाध्ययनविषयाः भूयासुश्चेत्तर्हि उक्तसन्दर्भपराण्यन्यान्यपि तथ्यान्युद्घाटितानि भवितुमर्हन्तीति न संशयः। भवतु नाम वैदिकऋषीणामपरिचयो वर्तमानविद्युदूर्जाया अतिविकसितस्वरूपेण तज्जन्यैर्नूतनतमाविष्कारैः, किन्तु विद्युतस्तज्जन्योर्जासङ्ग्रहप्रविधीनां प्रायोगिकसिद्धेश्च कल्पनायाः मूले वैदिकविद्युद्विज्ञानस्य यद्दायं दृश्यते तन्नूनमेव मर्षणीयम्। वैदिकवाङ्मये पदे–पदे सूर्य–तडिद्–दिद्युद्–मरुद्–रुद्र–अश्ना–अशनि–इन्द्र–अपान्नपाद्–वैश्वानर–इत्यादिशब्दानां प्रयोगः वैद्युताग्नेः विविधरूपाणामर्थे कृतः इत्यत्र न सन्देहः। किं

बहुना ? उपनिषदः विद्युतं ब्रह्मरूपं मत्वा तस्मिन् स्थितं बलम् ( ऊर्जां ) मुख्यं मन्यन्ते। विद्युदूर्जया सञ्चाल्यमानानां बृहत्तराणां यन्त्रोपकरणानां घूर्णनादिगतयः येन चक्रीयनोदनबलेन सम्भाव्यन्ते तस्य सङ्केतः ऋग्वेदस्यैकस्मिन् मन्त्रे द्रष्टुं शक्यते। मन्त्रेऽस्मिन् यज्ञेनेन्द्रस्य वर्द्धनं तेन च भूमेर्व्यवर्तनं व्यवस्थापयत ओपशस्योल्लेखः प्राप्यते–

**यज्ञ इन्द्रमवर्द्धयद् यद् भूमिं व्यवर्तयत्।**
**चक्राण ओपशं दिवि।**

ऋग्वेदः– ८/१४५

ओपशः कश्चित्पारिभाषिकः शब्दः। यदा सूर्यरश्मयः मूर्तपदार्थे आघातं कृत्वा परावर्तन्ते, तर्हि तस्य गमनमार्ग आगमनमार्गात्किञ्चिदन्तरे भवति। एतदेव ओपश इत्युच्यते। ओपशनिर्माणे यद्बलमूर्जा वाऽपेक्ष्यते सा विद्युज्जन्या भवति।

एवं विद्युदूर्जाया आधुनिकसिद्धान्तसन्दर्भे वैदिकविवेचनेन नैकानि तथ्यानि स्पष्टीभवन्ति–

१. मूलतोऽव्यक्तोऽग्निः विद्युद् इति।
२. अव्यक्तत्वात्सा ऊर्जारूपेण सर्वत्र व्याप्ता।
३. ( विदानादवखण्डनाद्वा ) विद्युद्दीप्तिरूपा भवति।
४. आदित्यो विद्युतः प्रथम आश्रयोऽन्तरिक्षश्च द्वितीय आश्रयः।
५. उत्तमे द्युलोके दिव्यज्योतिरूपेण निराश्रिता राजते विद्युत्।
६. द्वितीय आश्रयेऽन्तरिक्षे मध्यमे जले तडिद्रूपेण विद्युत्तिष्ठति। तत्र स्तनयित्नुः दिद्युत् रुद्र अपान्नपादित्यादयः तस्या विविधा अवस्थाः भवन्ति।
७. सा इन्द्रमरुद्वाय्वादिभिः ताड्यमाना ज्वालारूपेण भासते दीप्यते च। एवमन्तरिक्षे जलं विद्युतः वाहकम्।
८. ताडनजन्याघातेन विद्युच्चुम्बकीयास्तरङ्गाः जायन्ते ये प्रकाशरूपाः भवन्ति। आकर्षणगुणत्वं च जायते विद्युतः।
९. तरङ्गरूपेयं विद्युद् जले रसरूपेण दीप्यते पार्थिवमाश्रयं च प्राप्योपशाम्यति।
१०. पार्थिव आश्रयः द्विधा भवितुमर्हति– काष्ठरूपो धातुरूपो वा।
११. मनुष्यैः परिगृह्यमाणा ( उपात्तो हि मनुष्यैः ) स्वजातिधर्मं ( दीपनमाकर्षणं वा ) त्यक्त्वाऽश्रयस्य धर्मं प्रतिपद्यते। अस्य तात्पर्यमेतत् प्रतीयते यदाश्रयानुसारेण मानवाः विद्युतः विविधानुपयोगान् कर्तुं शक्नुवन्ति।
१२. पार्थिवधातुबहुलेनाश्रयेण सम्बद्धा विद्युत् शरीरदीप्तिर्भवति।
१३. काष्ठेनान्येन वाऽप्रतिहतमूर्तिस्वभावकेन पार्थिवधातुबहुलेनोपशाम्यत्यर्थात् काष्ठम्

वा 'अप्रतिहतमूर्तिः स्वभावो यस्य' स धातुर्वा विद्युतः कुचालकः भवति।

१४. उक्तप्रकारेण वैश्वानरोऽग्निः शुद्धविद्युद्रूपेण जलविद्युद्रूपेण च सङ्ग्रहीकर्तुं शक्यते।

१५. निरुक्ते रासायनिकपद्धत्या शुष्कगोमयेनापि विद्युदूर्जासन्धानविधिरुक्तः। तदनुसारेणोत्तरायणे गते सूर्ये प्रखरकरसम्पर्कात् कंसं ( रङ्ग– ताम्रसंयोगजनितं धातुविशेषं ) मणिं ( सूर्यकान्तमणिं ) वा परिशोध्य प्रतिस्वरे ( प्रत्युपतापे ) कस्मिंश्चिद्विशुद्धप्रदेशे शुष्कगोमयं करीषादिकं स्थापयित्वाऽग्निसंस्पर्शनेन विनैव शुष्कगोमयं प्रदीप्यते दह्यते इति। एवं शुष्कगोमयजन्माऽयं वैश्वानरः वैद्युताग्निः पार्थिव एव सम्पद्यते। एवमादित्याद्वा कंसाद्वा मणेर्वा यो जायतेऽसावपि च वैश्वानर उच्यते। सन्दर्भेऽस्मिन् यास्कः **'वैश्वानरो यतते सूर्येण'** ( ऋग्वेदः १/९८/१ ) इति मन्त्रमुद्धरति–

निरुक्तम्– ७/६/२७

अयं वैदिकविधिः ग्रामस्तरे विद्युन्निर्माणप्रकल्परूपेणाद्यापि प्रचलति।

निष्कर्षतया वक्तुं शक्यते यद्वेदेषु प्रतिष्ठिताया अग्निविद्याया रहस्यं केवलं ज्वलच्छिखस्याग्नेः स्वरूपेषु निहितं न वर्ततेऽपितु बहुविधेषु विद्युत्सञ्चालितेषु प्रकल्पेषूपयोगेषु च विनियोज्यमानस्य बलस्योर्जायाश्च सङ्ग्रहवितरणदृशाऽपि महत्त्वपूर्णमस्ति। किमपि पूर्वाग्रहं विना सैद्धान्तिकाग्निविद्यायाः व्यावहारिकस्याग्निकर्मणश्चान्योऽन्याश्रितं स्वरूपं विमृश्यते चेत्तर्हि क्षेत्रेऽस्मिन् वैदिकवाङ्मयस्य किमप्युल्लेखनीयं योगदानं दृष्टिपथमायाति।



# जीवनतत्त्वम्

सर्वेषामपि दार्शनिकचिन्तनधाराणां मूलं जीवनं भवति। जीवनमेव हि समग्रव्यवहारस्य हेतुः। जीवमाना एव लोकाः लोकैषणावित्तैषणापुत्रैषणापराः योगक्षेमं साधयन्त इन्द्रियादीनां विषयेषु वर्तन्ते। जीवमाना एव दार्शनिकाः ऋषयश्च साक्षात्कृतधर्माणो गतानागतयोश्चिन्तने प्रवर्तन्ते। जीवमाना एव च वैज्ञानिकाः जीवनस्य जैविक–भौतिकसङ्घटनस्य विश्लेषणं कुर्वन्ति। जीवमाना एव साधकाः जीवात्मपरमात्मनोः संयोगरूपयोगमधिगच्छन्ति ब्रह्मनिष्ठाश्च ब्रह्मानुसन्धाने यतन्ते।

अस्तु। किं नाम तज्जीवनमिति प्रश्न आदिकालादेव मानवप्रज्ञामान्दोलितां कृत्वा जीवनस्य रहस्यमुद्घाटयितुं प्रैरयत। 'कुत आजाताः? कुत इयं विसृष्टिः?' इत्यादि जिज्ञासा 'क्वास्ति मानवस्य गम्यमिति' दृष्टिश्च जीवनस्यारम्भतोऽपवर्गपर्यन्तं सर्वतोभावेनाध्ययनाय हेतुरिति वक्तुं शक्यते। इदानीं प्रश्नो भवति 'किमस्ति जीवनस्य प्रथमोन्मेषबिन्दु', किञ्चास्ति जीवनस्य विरामसीमा ? किं शतवार्षिकमायुष्प्रमाणं जीवनं यस्य कृते 'जीवेम शरदः शतमदीनाः स्याम शरदः शतमि'ति कामना कृता ऋषिभिः। तस्य जीवनस्य शतवार्षिकस्थितेः रहस्यञ्च 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति उपनिषद्वाक्ये प्रतिपादितम्। भूतात्मवादिनः पृथिव्यप्तेजवायूनां विशिष्टसंयोगेन जातचैतन्यं शरीरमेव जीवनं मत्वा जीवनमृत्यू स्वाभाविकघटनामात्रमिति स्वीकुर्वन्ति।

सन्दर्भेऽस्मिन् श्रीमद्भगवद्गीतायाः श्लोकोऽयं विचारणीयः–

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।**
**अव्यक्तनिधनान्येव तत्र का परिदेवना।।**

उक्तवचनानुसारेण जीवनमनाद्यनन्तं चक्रं, दिक्कालौ, तत्र भवा समष्टिश्च तस्य चक्रस्य स्वरूपाधायकानि तत्त्वानि। निरन्तरं गतिमाने चक्रे व्यक्तांशोऽतिन्यूनो भवति। सोऽपि दृष्टिसापेक्षः व्यक्तिसापेक्षश्च भवति। वस्तुतः सर्वमपि जगत् काले वर्तते। काल एव जन्यानां भूतानां (प्राणिनां चेतनानां) जडानां च जनकः जगतश्चाश्रयोऽस्ति। यथोक्तं न्यायसिद्धान्तमुक्तावल्याम्–

**जन्यानां जनकः कालः जगतामाश्रयो मतः।**

गच्छतीति जगदित्यर्थानुसारेण सर्वेऽपि परिणमनशीलपदार्थाः गतिशीलपदार्थाश्च

कालाश्रिता एव भवन्ति। काल एवायुः सर्वेषां व्यवहाराणां जीवनमरणादीनाञ्चाश्रयः। यथा सुश्रुतः कथयति–

**कालो हि नाम भगवान्स्वयंभूरनादिमध्यनिधनोऽत्र रसत्यापत्सम्पत्ती जीवितमरणे च मनुष्याणामायत्ते। स सूक्ष्मामपि कलां न लीयत इति कालः। सङ्कलयति कालयति वा भूतानि इति च कालः।**

एवं सृष्टिलयौ जन्ममरणे उत्पत्तिविनाशावनादिनिधनस्य कालस्य व्यक्ताव्यक्तांशौ। समष्ट्यपेक्षया प्रतिसर्गतः प्रलयपर्यन्तमेकं जीवनचक्रं भवति। व्यष्ट्यपेक्षया प्रथमसृष्टितः मोक्षपर्यन्तं तत्त्वतः जीवनचक्रं प्रवर्तते। किन्तु व्यवहारदृशा शतवार्षिकमायुः पित्रोरंशात् शुक्रशोणितसंयोगवशाच्चान्नमयकोशे प्रतिष्ठितस्य जीवात्मन एकं विचक्रमणं जीवनमिति वक्तुं शक्यते।

तात्त्विकं व्यावहारिकं चेत्युभयदृशा जीवनस्य स्वरूपं विश्लेषयितुं जीवनमिति शब्दस्य योगविभागः क्रियते चेत्तर्हि जीव प्राणधारणे इति धातुः प्रकृतिः ल्युट् भावे इति च प्रत्ययः जीवनस्य स्वरूपनिर्धारकं घटकद्वयम्। एवं प्राणधारणस्य भावः जीवनमिति वक्तव्यम्। प्राणधारकश्च जीवः जीवनस्य मुख्याश्रयः। अतः जीवनस्य स्वरूपमवगन्तुं घटकत्रयस्याभिप्रायः स्पष्टीकर्तव्यः–

क. प्राणः

ख. जीवः

ग. भावः

**प्राणः –**

प्राणः जीवनस्य मूलघटकत्वेन ज्ञायते, यस्यार्थो भवति 'पूरण' इति। एवं प्रणापानसमानोदानव्यानात्मकाः पञ्च–प्राणाः शरीरे व्याप्ताः स्वस्वकार्येषु रताः सन्तः जीवनस्य वाहकाः भवन्ति। एतस्मादेव प्राणाः जीवितमित्युच्यन्ते। मुण्डकोपनिषदि सर्वभूतैः प्राणँ एव विभातीति प्राणानां भूतैः सह ताद्रूप्यं प्रतिपादितम्–

**प्राणो ह्येष यः सर्वभूतैर्विभाति।**

जीवस्य जीवत्वं प्राणवत्त्वादेव भवति। जीव आत्मा विशुद्धे प्राणे विभाव्यते–

**प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्येष आत्मा।**

प्राणा एव भूतानां स्फुरणस्य हेतुत्वेन ज्ञेयाः। प्राणमेव मनुष्याः पशवः देवाश्चानुप्राणन्ति अतः भूतानामायूरूपेण प्राणः परिभाषितः–

**प्राणं देवा अनुप्राणन्ति। मनुष्याः पशवश्च ये प्राणो हि भूतानामायुः। तस्मात्सर्वायुषमुच्यते। एतस्मादेव ये प्राणायामादिभिः प्राणान्संयम्य प्राणब्रह्मोपासते**

**ते आयुः प्राप्नुवन्ति। इन्द्रियाणां विषयग्राहकत्वं वाचो विकारः मनसश्च सङ्कल्पः प्राणैः प्रतिष्ठिता एव विषयप्रकाशने प्रभवन्ति।**

तैत्तिरीयोपनिषदनुसारेण प्राणा एव जन्मस्थितिलयानां कारणं भवन्ति–

**प्रणाद्ध्येवं खल्विमानि भूतानि जायन्ते। प्राणेन जातानि जीवन्ति। प्राणं प्रयन्त्यभिसंविशन्ति।**

प्राणस्य कारणञ्च क्षरब्रह्मरूपः पुरुषो भवति।

वैशेषिकदर्शने आत्मनः प्रथमं लिङ्गमात्मेत्युक्तम्–

**प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियविकारा सुखदुःखेच्छा–द्वेषप्रयत्नाश्चात्मनो लिङ्गम्।**

तत्त्वत आत्मा लिङ्गी भवति स च निरवयवत्वात् जीवच्छरीरस्यैव प्राणादिलिङ्गैरनुमीयते। जीवच्छरीरं हि प्राणवदेव सज्जीवति।

एवं प्राण एव जातानां जीवनाधारत्वेन कल्प्यते। वायोः स्वरूपविशेषं प्राणो भवति तस्य परिभाषा 'प्राति पूरयति चैतन्यमिति प्राण' इति कर्तुं शक्यते। अस्मिन्नर्थे प्राणः बलं भवति, यत् जडपदार्थेषु चैतन्यभूतस्फुरणस्य हेतुः भवति। बलजन्यनोदनेनैव प्राणिषु व्यक्ततया श्वासोच्छ्वासः सर्वविधचेष्टानां जीवनस्य चाधारो भवति। अपानादिचतुर्भिः सह मिलित्वा सर्वेषामवयवानां सञ्चालनं करोति। उक्तदृशा प्राणस्वरूपनिर्धारकाश्चत्वारो विषयाः भवन्ति–बलमिन्द्रियमायुः श्वासोच्छ्वासश्चेति।

जैनदर्शने जीवाजीवद्रव्ययोः विवेकप्रसङ्गे प्राणानां चातुर्विध्यं प्रतिपाद्य जीवस्य स्वरूपमुक्तचतुःप्राणैः जीवितद्रव्यरूपेणोक्तम्। बलप्राणस्तत्र कायमनोवाग्भेदेन त्रिविधो भवति। तत्र कायबलं सम्पूर्णशरीरं व्याप्यावयवानां चेष्टादिकारणं भवति। मनोबलं सङ्कल्पानां नानात्वे हेतुर्भवति। वाग्बलं च ब्रह्मवर्चसो हेतुर्भवति। भौतिकविवेचनदृशा प्राणो वायुर्भवति, कायः पृथिवी भवति, मनो जलस्वरूपं भवति, वाक्च तेजसो रूपं भवति। चत्वार्यपि वायुपृथिवीजलतेजांसि संयुक्तोर्जया जीवनचैतन्यस्य प्रत्यायकाः भवन्ति। इन्द्रियप्राणः ज्ञानेन्द्रियाणां विषयप्रकाशनक्षमत्वात्पञ्चरूपो भवति। आयुप्राणः कालभावं व्याप्य जन्मतः मरणपर्यन्तं प्राणिनां प्राणनस्य हेतुर्भवति। आत्मा प्राणाश्रित एव जीवभावं प्राप्नोति। जीवस्य भावश्च जीवनमिति वक्तुं शक्यते। प्राणधारणक्रियायाः कर्ता हि जीवो भवति। अतः जीवनस्य स्वरूपावबोधाय प्राणधारणस्य समग्रामवधारणां स्पष्टीकर्तुं च जीवस्य स्वरूपं विज्ञेयम्।

**जीवः –**

जीवः तात्त्विकरूपेण ब्रह्मणोऽभिन्नो मन्यते। 'जीवो ब्रह्मैव नापरः' इति स्वीक्रियते

चेत्तर्हि जीवोऽपि ब्रह्मवदेव नित्योऽनिर्वचनीयश्च भवति। वस्तुतः जीवः प्रत्यगात्मनोऽवस्थाविशेषा। यावत्कालं प्राणधारणं न करोत्यात्मा तावत्कालं सः जीवो नोच्यते। यदा च प्राणं बिभर्ति तदात्मा जीव इत्युच्यते। किन्त्वस्यां दशायामधिष्ठानापेक्षा भवति यतोहि प्राणनार्थमाश्रयोऽपेक्ष्यते। स चाश्रयोऽधिष्ठानं वा शरीरं भवति। अतः प्राणनापेक्षया जीवो यदा शरीराश्रयत्वमधिगच्छति तदा पुरुष इत्युच्यते। यद्यपि शरीरे स्थित आत्मा एव चैतन्यरूपेण विराजते किन्तु तस्यात्मनो ज्ञानं प्राणापानादिभिरेव भवति। प्राणादिलिङ्गानामधिष्ठानं यथार्थतः जीवो भवति। शरीराधिष्ठानतयैव जीवः कौमारयौवनजरादिस्वरूपेषु मर्त्येष्वमृतरूपेण नित्यत्वेन तिष्ठत्यमर्त्येषु च वृद्ध्यादेः कारणं भवति। यथा सङ्केत्यते ऋग्वेदे—

**अयं होता प्रथमः पश्यतेममिदं ज्योतिरमृतं मर्त्येषु।**
**अयं स जज्ञे ध्रुव आनिषत्तोऽमर्त्यस्तन्वावर्धमानः।।**

जीव एव गत्यागतिरूपेणोत्क्रान्तः नानाशरीराणि प्रविशति—

**उत्क्रान्तिर्गत्यागतीनाम्।**

एतस्मादेवायं जीवो देहीत्युच्यते। प्राणधारणत्वाज्जीवस्य स्वरूपं सदसदात्मकं भवति। अणीयस्त्वादसावसत् प्राणाधिष्ठानत्वाच्च सद् भवति। अनेनैव कारणेन प्राणैर्विना सर्वाणीन्द्रियाणि मनो वाक् च निराश्रिताः भवन्ति। प्राणेषूत्क्रान्तेषु जीवनस्य नाशो भवति। एवं जीवप्राणयोरभेदतादात्म्यमुपपद्यते।

**भावः –**

जीवनस्य प्रत्यायकः ल्युट्प्रत्ययवाच्यः 'भावो' भवति। भवतीति भावः भवनं भावो वेत्यर्थे भावः सत्तासामान्यस्य बोधको भवति। सत्तासामान्यं 'नित्यमनेकसमवेतत्वम्' इत्युक्तम्। साङ्ख्यदर्शनानुसारं भावः सद् भवति सतश्चाभावो न भवितुमर्हति। यथा श्रीमद्भगवद्गीतायामुक्तम्—

**नासतो विद्यते भावो नाभावो विद्यते सतः।**

'सदेव सोम्येदमग्र आसीदिति' छान्दोग्योपनिषद्वचनं व्यक्तसृष्टेरादौ सन्मात्रमेवासीदिति प्रतिपादयति। सृष्टेरभिप्राय उक्तदृशाऽव्यक्तस्य व्यक्तीभावो भवति। भावोऽयं मात्रमेका घटना नास्त्यपितु षड्घटनानां समुच्चयो भवति। एताः घटनाः क्रमिकरूपेण जायमानाः निरुक्तकारैः भावविकारा उक्ताः। ते च जन्मस्थिति–विपरिणामवृद्ध्यपक्षयविनाशाः सत्तायाः षडायामाः भवन्ति। काचिदपि घटना सहसैव न भवत्यपितु जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते नश्यति चेति षट्क्रमेषु पूर्णा एवापवर्गं (सिद्धिं) प्राप्नोति।

वस्तुतः भावाः धाराप्रवाहरूपास्तरङ्गरूपाः वा भवन्ति। तरङ्गाणां गतिर्द्विधा भवति–विचक्रमणस्वरूपा निरन्तरा (ऋजुप्रवाहरूपा) च। प्रतिविचक्रमणं भावस्य षड्विकाराः कालस्य षट्सूक्ष्मपलेषु जायन्ते। अनवरतमेष क्रमः प्रचलति। विचक्रमणं पदार्थानां स्थितिं सूचयति तस्यामेव जडचेतनात्मकाः पदार्थाः सत्तावन्तो भवन्ति। स्थितेः व्यवहारहेतुर्दिगित्युच्यते। एतस्मादेव पदार्थाः भावा उच्यन्ते। निरन्तरा गतिः कलनाविषयत्वात्कालस्य व्यवहारहेतुर्भवति।

जीवानां दिक्कालाभ्यां योगो भावो वा जीवनमिति वक्तुं शक्यते। तत्त्वतः सर्वेऽपि पदार्थाः दिक्कालापेक्षत्वाज्जीवनस्य विषयाः भवन्ति। यतोहि सर्वं जगद् यथा प्राणाधीनं भवति तथैव भावाश्रितमपि। सूक्ष्मरूपेण सर्वेष्वपि वस्तुषु प्राणाः स्पन्दन्ते। व्यवह्रियते हि लोके यदमुकवस्तुनः जीवनमधिकं न्यूनं वेति।

उक्तदृशा व्यक्तेः प्रथमः क्षणः जन्मोत्पत्तिर्वा तिरोभावस्य पूर्वक्षणपर्यन्तमवस्थिता व्यक्तावस्था एव जीवनम्।

एवं जीवनस्य प्रकृतिः प्राणधारणात्मिका प्रत्ययश्च भावरूपो भवति। प्राणानामधिष्ठाता जीवो भवति भावस्याधिष्ठानञ्च शरीरं भवति। जीवशरीरयोः प्राणभावयोर्वा योगो जीवनमिति वंक्तुं शक्यते। जन्मादयो धर्माः शरीरस्य भवन्ति। जीवः प्राणनार्थं शरीरमधितिष्ठति, जन्मादिक्रमेण च शरीरनाशे सति च प्रेत्यभावं प्राप्नोति। 'पुनरुत्पत्तिः प्रेत्यभावः' इति न्यायसूत्रस्य भाष्ये वात्स्यायनः स्पष्टीकरोति–

**पूर्वोपात्तान् देहादीन् जहाति तत्प्रैति यत् तत्रं अन्यत्र वा देहादीन् उपपद्यते तद् भवति।**

सृष्टेरादौ परमात्मनानन्तजीवानामुत्पत्तिः कृता। तत आरभ्य जीवानां जननमरणपरम्परया मोक्षपर्यन्तमेकशरीरत्यागानन्तरमपरशरीरप्रवेशक्रमः प्रचलति। शरीरद्वयस्य मध्येऽपि सूक्ष्मशरीरे वर्तमानः जीवः सूक्ष्मरूपेण प्राणेन संयुज्यते। अतः मूलतो जीवनक्रमोऽविच्छिन्नतया प्रचलति।

एकशरीरापेक्षया जन्मतः मृत्युपर्यन्तं जीवनस्य प्रत्ययः जीवनकाल एव भवति यः कालस्य काचिद् ह्रस्वा कला एवेति वक्तुं शक्यते। तस्य जीवनस्य प्रतीतिरन्नमयकोशतया भवति। तदेवान्नमयकोशरूपं शरीरं मनोमयप्राणमय–विज्ञानमयानन्दमयकोशानामधिष्ठानं भवति। वर्तमानशरीरस्य वृद्ध्यादिकं प्राणाधीनं भवति। यावत्कालं प्राणधारणस्वभावात्माको जीवः निवसति शरीरे तावत्कालमात्रं जीवच्छरीरमिति व्यवह्रियते।

आयुष्प्राणापेक्षया भारतीयदर्शने शतवार्षिकजीवनस्य कल्पना कृता। अन्नरसमयत्वाच्च वाय्वग्निजलात्मकानां वातपित्तकफानां संहतिः त्रिदोषरूपेण

शरीरस्यायुष्यार्थमावश्यकी स्मृता। वायुस्तत्र साक्षात्प्राणवायुत्वया प्राणानामधिष्ठाता भवति। अग्निर्बलरूपेण सर्वेषामपि शरीराणामूर्जाहेतुर्भवति। जलञ्च वाय्वग्न्यो-राच्छादकं तृप्त्यादिप्रदानत्वात्साक्षाज्जीवनमुक्तम्।

शरीरवृद्धिकराः भावाः 'कालयोगः स्वभावसंसिद्धिः आहारसौष्ठवमविघातश्चेति मताः।' तत्र कालयोगो द्विधा भवति नित्योऽवस्था च। अवस्था शैशवादिपरिणामतयैकस्यैव जीवनस्य स्थित्यादीनां हेतुर्भवति। स्वभावसंसिद्धिरदृष्टाऽचिन्तनीया च भवति। अनुदिनमुचिताहारादिना वर्धमानं विघातादिभ्यश्च रक्षितं शरीरं कालयोगेन स्वभावसंसिद्धया च पूर्णजीवनं पूर्णायुरूपेण प्राप्नोति।



## शब्दाद्वैते वैद्युतिकीसिद्धान्तः

वर्तमानकालखण्डः वैज्ञानिकसङ्क्रमणस्य कालोऽस्ति। सर्वेषामपि वैश्विकघटनाक्रमाणां मूलेऽस्ति काचिदखण्डशक्तिः, यस्याः ज्ञानं ग्रहणमुपयोगश्च मानवैः कर्तुं शक्यत इति चिन्तनं विधाय वैज्ञानिकैः मूलतया ब्रह्माण्डीयोर्जायाः ज्ञानं प्राप्य तदाश्रिताः बहुविधाः प्रक्रमाः प्रविधयश्चोपपादिताः। वैद्युतिकी तेष्वन्यतमा, सर्वाधिकं महत्त्वपूर्णा, मानवजीवनेन घनिष्ठतया सम्बद्धा चास्ति। सर्वेषामपि वैज्ञानिकोपकरणयन्त्राणां सञ्चालनं, नैत्यिकगृहोपकरणानां प्रयोगः, यातायातसाधनानां गतिनियन्त्रणं, दूरसंवेदि–दृश्यश्रव्य–प्रक्रमैः समस्तस्यापि नामरूपस्य ग्रहणक्षमता–साधनं, किं बहुना? सम्पूर्णमपि विश्वं विद्युच्छक्त्यधीनमिव प्रतिभाति।

का नाम वैद्युतिकी विद्युद्वेति यदाश्रितो जीवलोकोऽखिलमैश्वर्यं करे निधाय तिष्ठन्नस्ति। वैद्युतिकी तत्कृत्रिमविज्ञानमस्ति, यदन्तर्गतं ब्रह्माण्डीयविद्युतः तात्त्विकज्ञानपूर्वकं तस्या विविधमाध्यमेन ग्रहणं रूपान्तरणमनुप्रयोगश्च क्रियते। विद्युद् वै मूलपरमाणुषु विद्यमानो धनावेशोऽस्ति स च मूलतः चुम्बकीयोर्जास्वरूपः। बृहदारण्यंकोपनिषदि ब्रह्मरूपेण विद्युतः प्रतिष्ठापूर्वकमुक्तं यद् विदानात् खण्डनाद्विद्युदित्युच्यते।[1]

विदानमखण्डस्यैव भवितुमर्हति। खण्डनात् विदानाद्वा स्फोटो जायते, स्फोटान्नादः, नादाद् ध्वनिः, ध्वनेश्च प्रकाशः सम्भवति स च प्रकाशोऽर्थप्रकाशको भवति। अखण्डत्वं वस्तुसापेक्षं भवति। ब्रह्माण्डस्याखण्डत्वं नानाजगद्वस्त्वपेक्षया वर्तते, पदार्थानामखण्डत्वमवयवापेक्षयाऽवयवानाञ्चाखण्डत्वं परम्परया परमाणुसापेक्षं भवति, परमाणोरप्यखण्डत्वं तद्रूपविभागतया स्वरूपसापेक्षं भवति। एवं सर्वकालेषु सर्वदेशेषु च विदानस्याविच्छिन्नत्वाद्विद्युद्वर्तते। निरन्तरं स्फोट–प्रक्रियायाः कारणाद् विद्युदियं तरङ्गस्वरूपा धाराप्रवाहवच्च भवति। विदानात् परिणामत्रयं जायते– (क) अखण्डात् खण्डस्य क्षरणम्, (ख) मूलतत्त्वस्य स्थितिः, (ग) ऊर्जायाः विस्तारो विकासो वा। अत्र वैशिष्ट्यमेतद् यत्त्रिष्वपि परिणामेषूर्जातरङ्गा एव वस्तुनः स्वरूपं निर्धारयन्ति। एवं पदार्थस्य भौतिकसंरचनायामप्यूर्जारूपेण प्रतिक्षणं विद्युत्तिष्ठति। सा चोर्जा त्रिविधा भवति–

क. **पदार्थगतोर्जा स्थितिजोर्जा वा (Static or potential energy)** पदार्थे जडत्वस्य गुरुत्वस्य च कारणभूतेयमूर्जा द्रव्यमानं सङ्कलयति।

ख. **गतिजोर्जा चरो वा (Variable)** इयं तरङ्गप्रवाहस्वरूपा (wave) पदार्थे निरन्तरं परिणामस्वभावस्य क्षरत्वस्य च कारणं भवति।

ग. **स्थिरोर्जा सकलोर्जा वा –** इयमक्षरस्वरूपाऽचररूपा (Constant) पदार्थानां चराचरात्मकस्वभावं विभावयति। एतस्मादेव कारणात् पदार्थस्य चरांशोऽचरांशश्च क्षरत्वाक्षरत्वमुपपादयति।[2]

समष्टितयाऽक्षरोर्जा (constant) अव्यया सती धनावेशे ऋणावेशे चोभयत्रापि स्थिरत्वेन राजते। गतिजोर्जा ऋणावेशस्य विदानस्य कारणं तरङ्गरूपा च भवति। तत्र ऋणावेशितकणानां तरङ्गप्रवाहः कारणं (Cause) भवति।[3] विद्युत्तस्य कार्यं (effect) भवति। कार्यरूपेण विद्युतः स्वरूपे घटकत्रयं स्मरणीयम् –

१. विद्युद्धनावेशरूपा चुम्बकीयशक्तिर्भवति।
२. व्यक्ततया सा तरङ्गप्रवाहरूपिणी भवति।
३. विद्युत्तरङ्गप्रवाहः ज्वालारूपो भवति।

निरुक्तकारोऽपि विद्युतस्तरङ्गरूपत्वं ज्वालारूपत्वञ्च प्रतिपादयति–

**साक्षात्कृतधर्माणो ऋषयो बभूवुः असाक्षात्कृतधर्मेभ्यो उपदेशेन मन्त्रान् सम्प्रादुः ग्लायन्तोऽवरेभ्यो विल्मग्रहणाय इमं ग्रन्थं समाम्नासिषुर्वेदं वेदाङ्गानि च।**[4]

एवं ज्वालारूपेण स्फुरन्ती विद्युत् प्रकाशनशक्तिस्वरूपत्वाद् ब्रह्माण्डेऽवस्थितानां सर्वेषामपि पदार्थानां नामरूपात्मकत्वेन प्रकाशनेऽभिव्यक्तीकरणे वा समर्था भवति। आधुनिकाः वैद्युतिकीविदोऽभियान्त्रिकप्रक्रियया तत्त्वानां विदानादाकाशीयविद्युतः ग्रहणं जलविद्युतः पार्थिवोर्जाया वायव्योर्जाया आग्नेयविद्युतो वोत्पादनं कृत्वा सर्वेष्वपि मानवोपयोगिक्षेत्रेषु बहुविधानि कार्याणि साधयन्ति। तन्मूले सिद्धान्त एक एव भवति। तदनुसारमाधुनिकवैद्युतिकी वायुतत्त्वे (gas) आकाशतत्त्वे (Vaccume) च वाहकत्वेन प्रयुज्यमाने पार्थिवादितत्त्वे (semiconductor) वा धनावेशितकणानां ऋणावेशितकणानां च तरङ्गप्रवाहस्य गतिं विज्ञाय प्रायः निम्ननिर्दिष्टक्षेत्रेषु विद्युतोऽभियान्त्रिकमुपयोगं कुर्वन्ति–

१. एकदेशतोऽपरदेशं प्रति सङ्केतप्रेषणम्।
(To carry signal from one place to another )
२. अभीष्टदिशि ऋणावेशितसङ्केततरङ्गाणां प्रवाहावरोधः।
(To obstruct the flow of electronic signal in a particular direction )
३. ऋणावेशितकणानां क्षरोर्जायाः विद्युत्परिपथेषु सङ्क्रमणम्।
(To transfer electronic energy from one circuit to another)

४. ऋणावेशितकणस्थायाः क्षरोर्जायाः भाण्डारीकरणम्
(To store electronic energy)

५. ऊर्जायाः रूपान्तरणम्।
(To convert one form of energy into another)

६. विद्युत्सङ्केतस्य (तरङ्गाणां) प्रक्रियाविधानम्।[४]
(To process the electrical signal)

उक्तपद्धत्या विद्युत्प्रक्रिययाऽकाशे प्रवहमाणानां ऋणावेशतया लघुत्वात् सञ्चरतां ध्वनितरङ्गाणां ग्रहणं रूपान्तरणञ्च नानानामरूपात्मकपदार्थतया कर्तुं सम्भाव्यते। अयमेवाक्षरस्य क्षरभावेन विवर्तनमिति वक्तुं शक्यते।

एवं तात्त्विकरूपेण पदार्थानां स्वरूपमप्यूर्जारूपं भवति। गणितीयपद्धत्या तस्य विधेः सूत्रीकरणम् 'अक्षरतत्त्वम् = क्षरोजा+पदार्थः' इति प्रकारेण कर्तुं शक्यते। तात्पर्यं खल्विदं यदक्षरतत्त्वे क्षरत्वं पदार्थत्वं च स्वभावतः विद्येते। समग्रेऽप्याकाशे नादात्मकवीचिवत्तरङ्गाः व्याप्यन्ते। वैज्ञानिकाः ऋषयस्तेभ्य एव वेदराशिरूपं ज्ञानं प्राप्य नामरूपतयाऽनन्तपदार्थानामनुसन्धानं कुर्वन्ति।[५] एवं नाद एवं पदार्थस्य कारणं भवति। वस्तुतः नादरूपतरङ्गाणां विवर्तनेन विद्युच्छक्तेरुत्पत्तिर्भवति, सा च मूलतो ध्वनिरूपा सती रूपान्तरणप्रक्रियया प्रकाशरूपा ज्वालारूपा वा भवति। समष्टितयाऽक्षरभूताऽपि व्यष्टितया क्षरत्वमधिगच्छति। एतस्मादेव **'पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते'** इति श्रुतिः प्रसिद्धा।[६] एवं ज्यामितीयविश्लेषणेनाक्षरबिन्दु स्थिरोर्जाया आरम्भिकं बिन्दु भवति। ततो यदा क्षरपदार्थः परिवर्त्यते तर्हि मूलत उभयोरभेदो भवति। एवम् 'अनन्तम्– १ = अनन्तम्, १+ अनन्तम् = अनन्तम्' इति योगविभागो जायते।

भारतीयदर्शने शब्दविवर्तसिद्धान्तः वर्तमानवैद्युतिकीसिद्धान्तस्याधारत्वेन कल्पयितुं शक्यते। तदर्थं शब्दसृष्टेः प्रक्रिया तत्सम्बन्धिशब्दानां स्फोटनादध्वनीत्यादीनां च स्वरूपोल्लेख आवश्यकोऽस्ति।

शब्द आकाशमहाभूतस्य तन्मात्रं भवति। आकाशस्य गुणो वर्णरूपो ध्वनिर्वाग्रूपो वा भवति। निरुक्ते 'शब्द' इति पदस्य विविधनिर्वचनेष्वन्यतममस्ति– **खेऽन्तरिक्षे शब्दं करोति'** इति।[७]

अन्यत्र **'शब्दयति इति शब्दः'**[८] इत्युक्तः।

अस्मिन्नर्थे शब्दो नादरूपः। पतञ्जलिः **'प्रतीतपदार्थको लोके ध्वनिः शब्दः'**[९] इत्यनेन वचसा शब्दस्य ध्वनिरूपत्वं पदार्थस्य प्रत्यायकत्वञ्चोपपादयति। अनया दृशा शब्दो व्यञ्जको ध्वनिरेवेति। व्यक्तशब्दस्य लक्षणं पतञ्जलिरेवं करोति–

**श्रोत्रोपलब्धिर्बुद्धिर्निग्राह्यः प्रयोगेणाभिज्वलितः आकाशदेशः शब्दः।**[१०]

अर्थात् श्रोत्रेण लभ्यः बुद्ध्या ग्राह्यः प्रयोगेणोच्चारणेनाभिज्वलितः प्रकाशित आकाशदेशः शब्दो विद्युत्तरङ्गप्रवाहत्वेन व्याप्तः प्राकृतो ध्वनिरेव। प्रतीतपदार्थकः शब्दः वैकृतो ध्वनिः।

अत्र विचारणीयं यद् 'आकाशदेशः शब्द' इति शब्देन आकाशस्तदात्मा समवायसम्बन्धेन सम्बद्धो वा। अवकाश आकाशः। पतञ्जलेर्मते आकाशदेशः शब्दः तद्रूप एव यतोहि शब्दः सूक्ष्मतयाऽव्यक्तरूपेणाकाशं व्याप्नोति। सर्वतो व्याप्तानां ध्वनितरङ्गाणां स्वरूपमनाहतनादतया भवति। आहते सति नादे तरङ्गप्रवाहावरोधे स्फोटो जायते, येन निरवयवास्तरङ्गाः प्रयोगेण (प्रकृष्टयोगेन संयोगेन सङ्घटनेन वा ) दृढीभूतपरमाणुत्वाद्व्यक्ततया प्रकाशितपदार्थत्वं प्राप्नुवन्ति।

प्राकृतो ध्वनिरेवाक्षरोऽविनाशि ब्रह्म तच्च शब्द एवेति व्याख्यातः, सम्यक्प्रयुक्तश्च श्रेयसाऽभ्युदयेन च पुरुषं बध्नाति—

**तदक्षरं ब्रह्म परं पवित्रं गुहाशयं सम्यगुशन्ति विप्राः।।**

**स श्रेयसा चाभ्युदयेन चैव सम्यक्प्रयुक्तः पुरुषं युनक्ति।**

अन्यत्र ह्युक्तम्-

**एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गेलोके च कामधुग् भवति।**[१२]

उक्तोभयोः वचनयोः 'सम्यग् प्रयोगः' नादस्य वर्णत्वेन शब्दत्वेन वा प्रकाशने पुरुषेण प्रयुज्यमानः प्रविधिरित्येव, येनाभीष्टार्थप्रकाशकाः शब्दाः प्रयुज्यन्ताम्। एतदर्थमक्षरशब्दतो व्यक्तशब्दस्योत्पत्तिविज्ञानमवधेयम्। अव्यक्तः शब्दः क्षरब्रह्मतया वाग्रूपो भवति, यस्याः चतुःरूपत्वं प्रतिपादितमस्ति। क्वचित् परा पश्यन्ती मध्यमा बैखरीति[१३] क्वचिन्नामाख्यातोपसर्गनिपाताः[१४] क्वचिच्च जातिगुणक्रियायदृच्छा[१५] इति वाचः शब्दस्य वा रूपाण्युक्तानि। वस्तुतस्त्रिष्वपि प्रतिपत्तिष्वस्ति कश्चिद् भेदः। परेत्यादीनि वाग्रूपाणि विवर्तदृशा भवन्ति, नामादीनि प्रयोगदृशा, जात्यादीनि च शब्दार्थसम्बन्धदृशा प्रविभज्यन्ते।

परावागेवाक्षरब्रह्मणोऽर्थविवर्तस्य कारणम्। सा च परावागाच्छा—दकत्वादानन्दरूपत्वाद्वा छन्द एवोक्ता। एतस्मादेव जगत् शब्दस्य परिणामश्छन्दसां विवर्तश्चेत्युक्तं भर्तृहरिणा —

**शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।**
**छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत।।**[१६]

छन्दो वाग्रूपो वेदः नादवीचितयाऽकाशे व्याप्तः ऋषिभिः वैज्ञानिकैः साक्षात्कृतः

प्रयोगेण प्राप्तः।[१७]

एवमक्षरब्रह्मव्यक्तजगतोश्च मध्यबिन्दु भवति वागिति। तत्र परावाक् पुरुषस्याक्षरब्रह्मणः रस इत्युक्तम्–

**पुरुषस्य वाग्रसः।**[१८]

बृहदारण्यकोपनिषदि वाक् परब्रह्म इत्युक्तम् –

**वाग् वै सम्राट् परं ब्रह्म।**

**वागेव विश्वा भुवनानि जज्ञे।**[१९]

इयं परावागेव शब्दब्रह्मणो नाभिस्था सर्वार्थप्रकाशकस्य नादब्रह्मणः कारणं भवति। परावागेव पश्यन्ती–मध्यमाक्रमेण बैखरी वाक्तया व्यक्तशब्दत्वेन विवर्तते। स एव शब्दः सर्ववर्णानां प्रकृतिरित्युक्तः –

**शब्दः प्रकृतिः सर्ववर्णानाम्।**[२०]

पाणिनीयवर्णोच्चारणशिक्षायां विवर्तस्य प्रक्रियेयं निम्नलिखितरूपेण दर्शिता–

**आत्मा बुद्धया समेत्यर्थान् मनो युङ्क्ते विवक्षया।**
**मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्।**
**मारुतस्तूरसि चरन् मन्दं जनयति स्वरम्।**
**आकाशवायुप्रभवः शरीरात्**
**समुच्चरन् वक्त्रमुपैति नादः।**
**स्थानान्तरेषु प्रविभज्यमानः**
**वर्णत्वमागच्छति यः स शब्दः।।**[२१]

यथा पिण्डे तथा ब्रह्माण्ड इति नियममनुसृत्यार्थसृष्टिप्रसङ्गे कल्पनीयम् यदाकाशस्थेन वायुना नोद्यमानाः ध्वनितरङ्गा यदा उच्चरन्त ऊर्ध्वदिशि सञ्चरन्तः परस्परं संयोगं प्राप्य वक्त्रम् (आरम्भम्) अभिव्यक्तेः प्रथमं बिन्दुं प्राप्नुवन्ति तदा वैकृतो ध्वनिराहतनादरूपेण प्रस्फुटति। सैव कण्ठादिस्थानेषु प्रविभज्यमानः वर्णत्वम् (आकारं) प्राप्नोति। तात्त्विकरूपेण वर्णरूपशब्दस्य कदापि क्षरत्वं न वर्तते। अयमेवाक्षरत्वस्याभिप्रायः –

**अक्षरं न क्षरति सर्वदा सर्वैः प्रयुज्यमानमपि न क्षीयते इत्यर्थः। वाग्वै समुद्रो न वै वाक् क्षीयते।**[२२] इति ब्राह्मणवचनेन वागक्षरं शब्दब्रह्मैव। एतस्मादेवा–क्षरब्रह्मणोऽर्थविवर्तः प्रक्रियते। यथोक्तं भर्तृहरिणा –

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।**[२३]

उक्तकारिकायां विवर्तस्य वैज्ञानिकक्रमः सम्यक् प्रतिपादितः। शब्दोऽत्र तत्त्वरूपेण मतो योऽर्थविवर्तस्य दशायाः पूर्वस्थितिः विद्यते। महाभाष्ये महर्षिणा पतञ्जलिना यन्नित्यः शब्दार्थसम्बन्धः[२४] स्वीकृतः सः विवर्तदशामधिकृत्यैवेति मन्तव्यम्। तत्त्वरूपेण शब्दोऽयक्तस्तरङ्गतया ब्रह्माण्डाकाशं व्याप्य स्थितः तरङ्गरूपो ध्वनिरेव। ऊर्जारूपेण विद्यते तदक्षरतत्त्वम्। उल्लेखनीयमस्ति यदमरकोशे शब्दस्यानेकेऽर्था उक्ताः। तेषु 'ध्वनि' इति शब्दोऽपि शब्दपदवाच्य : –

**शब्दे निनादनिनदध्वनिध्वानरवस्वनः।**
**स्वाननिर्घोषनिर्हादनादनिस्वाननिस्वनाः।**
**आरावरावसंरावविरावा.....**[२५]

शुक्लयजुःप्रातिशाख्ये शब्दस्य द्वे मूलरूपे उक्ते सङ्करोपः सङ्घातश्चेति –

**सम्यक्करणैरुपहितो हृदि वायुर्वेणुशब्दादिभिः शब्दीभवतीति सङ्करोपः। सङ्घातः पुरुषप्रयत्नः स आदौ येषां स्थानादीनां ते सङ्घातादयः तान् प्राप्य वाग्भवति वर्णो भवति इत्यर्थः।**[२६]

एवं सङ्करोप आघातजन्यो नादः प्राकृतो ध्वनिरव्यक्ता वागिति; सङ्घातश्च वर्णरूपो वैकृतो ध्वनिर्व्यक्ता वाक्। सा ज्योतिःस्वरूपा सर्वस्यापि जगतः प्रकाशिका। यथोक्तमाचार्येण दण्डिना –

**इदमन्धतमं कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारान्न दीपयेत्।।**[२७]

भर्तृहरिणा 'अनादिनिधने'त्यादिकारिकायां यस्याक्षरतत्त्वस्योल्लेखः क्रियते सः स्वरव्यञ्जनात्मकादक्षराद् भिन्नं मूलतत्त्वं प्रतीयते। व्यक्तो वर्णात्मकः शब्दोऽपि धारावाहिक–ककारगकारेत्यादिरूपेणोच्चार्यमाणत्वात्क्षरः किन्तु तात्त्विकरूपेणाक्षर एवातो विवर्तकाले धाराप्रवाहभूताः पूर्व–पूर्वतरङ्गैराहन्यमानाः पर–परतरङ्गाः परस्परम–नुप्रवेशेनानन्तेषु विलक्षणेष्वर्थेषु विवर्तन्ते। अव्याकृतोऽखण्डः शब्दस्तत्त्वरूपेण ज्योतिः (विद्युद् ) एव भवति, यत् 'प्रक्रियायाः' पूर्वं निष्क्रियावस्थायां सुप्तं भवति। तस्य सुप्तत्वान्निष्क्रियत्वं (nigativity) अतोऽनादित्वम् निधनत्वं च भवति। अस्मिन्नर्थे शब्दतत्त्वं दिक्कालावच्छिन्नं भवति।

**ततश्च दिक्कालावच्छिन्नं जगद् विवर्तते।**

अत्र प्रक्रिया विवर्तश्चेति पदद्वयं विशेषेण विचारणीयम्। 'प्रक्रिया' शब्देन

तथ्यद्वयमवगम्यते– क्रियायाः स्वभावः तत्स्वरूपञ्च। वस्तुतः प्रक्रिया क्रियायाः प्रकृष्टत्वं भवति यत्क्रियायाः तीव्रतां (velocity) परिमाणं (quantity) च द्योतयति। एतस्मादेव कारणाज्जगति पदार्थानां वैचित्र्यं विलक्षणत्वञ्च दृश्यते। प्रक्रियायाः स्वभावः कञ्चिन्निश्चितं क्रमं सूचयति यः 'विवर्त' इति पदस्य पारिभाषिक–तात्पर्यावबोधायावश्यकम्। भर्तृहरिः[२८] यास्कश्च[२९] एकमतेन भावस्य षड्विकारान् प्रतिपादयतः– जायते अस्ति विपरिणमते वर्धते अपक्षीयते नश्यति चेति।

अव्यक्तस्य व्यक्तीभावो जन्म, व्यक्तस्यास्तित्वं सत्ता वा, सतः विपरिणामः, परिणतस्य वृद्धिः, वृद्धस्यापक्षयो ह्रासो वा पुनश्चापवर्गो लयो वेति क्रमेण षड्भावविकारा अवश्यम्भवन्ति। कालस्य सूक्ष्मक्रमतया क्रमवती अपि क्रिया एकैव प्रतीयते। व्यक्तीकरणस्य प्रक्रियायाः प्रथमबिन्दु स्फोटोऽक्षरस्य क्षरत्वेन विकासो विस्तारबिन्दु वेति (स्फुट विकसने + घञ् = स्फोटः)। एवं स्फोट एव प्रक्रियायाः कारणम्। एतदेवारम्भस्य प्रथमबिन्द्विति वक्तुं शक्यते, यस्माद्विद्युत् (विदानाद् विद्युत्) गतिजोर्जारूपेण स्फुरति विकसतीति। उभयोरपि नामरूपयोः पदार्थयोः तदेव कारणम्। एवं व्यक्तस्य वृद्धयादि स्वाभाविकरूपेण प्रक्रियमाणं भवति। वृद्धिर्वस्तुतो विवर्तितवस्तुनो विस्तार एव, यः द्वितीयक्षणेऽपक्षयं प्राप्य नश्यति। एवं विवर्तनप्रक्रियाया एकं चक्रं कालस्य षड्सूक्ष्मघटकेषु पूर्यते,। अथ विवर्तः प्रतिक्षणमविच्छिन्नधाराप्रवाहतया (in the form of current) उत्पत्तिरूपेण विपरिणमते। लयः धाराप्रवाहस्य विरामबिन्दु।

विवर्तप्रक्रियायां कथमेकमेव तत्त्वं धाराप्रवाहतया नामरूपेऽधिगच्छतीति प्रश्ने सति शब्दोत्पत्तिक्रमः विवेचनीयः। परावागव्यक्ता सती गुहायां (नाभौ) केन्द्रे तिष्ठति। आत्मा बुद्धया मनः योजयित्वा पश्यन्तीं वाचं प्रतिष्ठापयति। मन उरसि मध्यमारूपेण वाचं प्रतिष्ठापयति। एतस्मादेव श्रुतिः उपदिशति –

**वाङ् मे मनसि प्रतिष्ठिता मनः मे वाचि प्रतिष्ठितम्।**[३१]

सः शब्दः वैखरीवाग्रूपः संयोगविभागाभ्यां करणैः स्फोटमवाप्य नानारूपतया विवर्तते। व्यक्तशब्दाः शब्दजाः शब्दा इत्युक्ताः –

**यः संयोगविभागाभ्यां करणैरुपजन्यते।**
**सः स्फोटः शब्दजाः शब्दाः ध्वनयोऽन्यैरुदाहृताः।।**[३२]

एवं स्फोटो ध्वनिः शब्द इत्येकस्यैव तत्त्वस्य विवर्तक्रमाः इति वक्तुं शक्यते –

**स्फोटरूपाविभागेन ध्वनेर्ग्रहणमिष्यते।**
**कैश्चिद्ध्वनिरसंवेद्यः स्वतन्त्रोऽन्यैः प्रकल्पितः।।**[३३]

व्यक्ते सति शब्दः प्रयोज्यो भवति। सम्यक् प्रयुक्त एव शब्दो यथेष्टार्थप्रकाशको भवति।

**एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवति।**

अनेन प्रकारेणाखण्डाऽक्रमा च वाग् नादस्फोटादिकारणात् वर्णपदादिभेदात्प्रत्यक्षोपलब्धौ बद्धा क्रमवती खण्डिता च भासते। पुरुषप्रयत्नस्तत्र साधनम्। फलवत्प्रयत्नः प्रविधिज्ञानं विना न भवितुमर्हत्यतः सिद्धान्तं विज्ञाय यथार्थस्वरूपानुकूलं सुप्रयुक्तं विज्ञानमर्थसाधकं प्रकाशकं वा भवति।

नादजन्यतरङ्गाः कदाचिदावर्तिक्रमेण कदाचिच्चानावर्तिक्रमेणाहन्यन्ते। धाराप्रवाहक्रमेऽन्त्यध्वनिना सह (आवृत्तिकारणात्) परिपक्वायां बुद्धौ शब्दोऽवधार्यते)।[36]

अनादिकालतः यावन्तो वर्णाः उच्चारिताः ये च वर्णाः कल्पिताः, ते सर्व एव व्यक्ताक्षराः सन्ति। आकाशे च तरङ्गप्रवाहरूपेण नित्यभावेन विराजन्ते–

**'ऋचोऽक्षरे परमे व्योमन्यस्मिन् देवा अधिविश्वे निषेदुः।'**[37]

इत्यस्य मन्त्रवाक्यस्य तात्पर्यमुक्तार्थ एवोपपद्यते। वर्तमानकाले विद्युच्छक्त्या तेषां तरङ्गाणां माध्यमेन समस्तस्यापि ब्रह्माण्डस्य वर्तमान–नामरूपाणां सङ्कलनस्य सङ्ग्रहणस्य च मूलेऽयमेव सिद्धान्त इत्यत्र विप्रतिपत्तिर्न स्यात्। मूलतः कस्यापि विचारस्य विषयस्य तत्त्वस्य वैकं मूलबिन्दु भवत्यपरञ्च परिवर्तनशीलवस्तु।

स्थिरं बिन्दु स्थितिजोर्जा सर्वेषु पदार्थेष्वेकैव। भवतु नामोर्जायाः परिमाणगतभेदः। एतद् बिन्द्वेव शुद्धतत्त्वं भवति। परिवर्तनशीलं वस्तु वैकृततत्त्वमेव भवति। तत्त्वत उभयोर्भेदो नास्ति। एतस्मादेव ध्वनितरङ्गा एव प्रकाशतरङ्गरूपेण, प्रकाशतरङ्गाश्च वस्तुरूपेण विवर्तन्ते। अनया दृशा स्थूलजगत् ब्रह्मणो विवर्तो वाचश्च विकार इति समीचीनमेवोक्तं वाक्यपदीयकारेण–

**शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।**
**छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत।।**[38]

अतएव चोक्तम् –

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**[39]

**शब्दब्रह्मैवेदमनाद्यविद्या वासनोपप्लवमानभेदमर्थभावेन विवर्तते, न तु वाचकादपि विभक्तं वाच्यमपि नाम किञ्चिदस्ति। काल्पनिक एव वाच्यवाचकविभागोऽयमविद्यैव विद्योपाय इत्याश्रियते। वाग्रूपता तु तत्त्वं सर्वत्र प्रत्यये तदानपायात्।**[40]

छान्दोग्योपनिषदि चैतदेव तथ्यं **'वाचारम्भणं विकारो नामधेयमिति**[41] वचनेन प्रतिपादितम्। 'अनाद्यविद्या' स्थिरोर्जा एवास्ति। व्यक्ततयाऽविद्यमानत्वादेव साऽविद्येत्युक्ता न त्ववेद्यत्वात्।

एवमक्षरयोर्ध्वनिप्रकाशयोरूर्जापदार्थयोः नामरूपयोः स्थिरगतिजोर्जयोः चराचरयोः जडचेतनयोर्वा तत्त्वतोऽभेदोऽस्ति।

शब्दस्य भौतिकस्वरूपं कीदृगिति प्रश्ने सति विचारणीयम् यत्समस्तमपि ब्रह्माण्डं तत्त्वतः शब्दरूपमेव। कथमिति ? आकाशः समवायसम्बन्धेन व्याप्यवृत्त्या सूक्ष्मतरङ्गरूपशब्देन व्याप्तः। आघातजन्यस्फोटेन गतेः कारणाद् धाराप्रवाहरूपेण तरङ्गबिन्दूनां संयोगः तज्जन्यञ्च स्थूलार्थप्रकाशनं सम्भवति।

स्थूलनामरूपात्मकजगतोऽनन्तविलक्षणपरिणामः शब्दतत्त्वस्य शक्ति–कारणाद्भवितुमिष्यते। मूलरूपेण शब्दतत्त्वस्य प्रमुखाः शक्तयः दिक्कालसाधन–क्रियाग्राह्यत्वग्राहकत्वसमवायादय उक्ताः।[४२]

वर्तमानवैद्युतिकीप्रविधावुपादेयत्वदृशैतासां शब्दशक्तीनां विवेचनं महत्त्वपूर्णमस्ति। विद्युच्छक्त्या सम्प्रति यान्यपि कार्याणि क्रियन्ते, तेषां सम्बन्धो दैशिकरूपान्तरणेन स्थानान्तरेण वास्ति। विशेषतो दूरसंवेदिप्रकमसन्दर्भे वर्तमाननामरूपाणामेव ग्रहणं कर्तुं शक्यते। कथमतीतानामपि वर्णानामाकाशे तरङ्गतया व्याप्तानां सङ्ग्रहः कर्तुं शक्यते वेत्यस्मिन् क्षेत्रे वैज्ञानिकाः 'प्रयोगान्' साधयितुं शक्नुवन्ति वेति चिन्तनसन्दर्भे भर्तृहरिसम्मतानामुक्तशब्दशक्तीनां दिङ्निदर्शनं क्रियतेऽत्र।

१. **दिक्** (Space) दिगवकाशरूप आकाशः सर्वपदार्थानामाश्रयः, यस्य परिमाणः पृथिवीजलाग्निवायुभ्यः क्रमशः दश–दशगुणाङ्कैरधिकं कल्पितम्। एतदापेक्षिकपरिमाणमस्ति। स्वरूपत आकाशस्य निरपेक्षपरिमाणः। अत एवानन्तत्वाच्छून्यमाकाश इत्युक्तः। शब्दाश्रयत्वात्सापेक्षतया 'दिक्' शब्दस्यैव शक्तिः।

२. **कालः** (Time) कालोऽविच्छिन्नोऽनन्ततरङ्गाणां धाराप्रवाह एव। एषः प्रवाहोऽनिधनत्वादक्षरो नित्यश्च। शब्दः सर्वकालेऽक्षर एव तिष्ठति। दिक्कालौ परस्परं सापेक्षावपि तत्त्वत एकस्यैव प्रवाहस्य रूपद्वयम्। दिक् शब्दस्यावर्तवद्धाराप्रवाहो वर्तते कालश्च ऋजुप्रवाहः। एवं दिगपि काले विद्यते। कालोऽपि वस्तुतः शून्यमेव। उल्लेखनीयमस्ति यदाधुनिकभौतिकीविदस्तरङ्गाणां प्रवाहं द्विधा साधयन्ति – चक्रवद् धारावच्च। तत्र चक्रवत्प्रवाहः दिग् (space) धारावत् प्रवाहश्च कालः (time) इति। एवं दिक्कालौ तस्यैवाक्षरप्रवाहस्य रूपद्वयमिति।

३. **साधनशक्तिः**

साधनशक्त्या ध्वनितरङ्गाणां सङ्ग्रहणं सम्भाव्यते येनार्थानां रूपनिर्माणं भवितुमर्हति। वर्तमान–इलेक्ट्रानिकभौतिकी पुरुषप्रयोगसाध्यायाः

विवर्तनप्रक्रियायाः प्रसङ्गे यद्‌गुणावेशितकणानां विवर्तनेन जायमानां प्रक्रियामुपदिशति, तन्मूले शब्दस्य साधनशक्तिरेव। यतोह्यणुनिर्माणं (formation of a particle) साधनेन (by collecting electrons) एव सम्भाव्यते।

४. **क्रियाशक्तिः**

अनया शक्त्या स्थूलपदार्थजगतो जीवनचक्रं (life cycle) निर्धार्यते। इयमेव चरत्वस्य (variability) हेतुर्भवति। अतएव व्यक्तपदार्थाः क्षराः भवन्ति। 'प्रक्रिया' इति पदस्य विवेचने क्रियाशक्तेः स्वरूपं पूर्वं विवेचितमस्ति।

## ५, ६, ग्राह्यत्वशक्तिः ग्राहकत्वशक्तिश्च

एताभ्यां शक्तिभ्यां शब्दतत्त्वस्यादानप्रदानं सभाव्यते। क्रियाप्रवाहे विवर्तन–प्रक्रियायां केचित्तरङ्गाः ग्राह्यत्वादपरैः ग्राहकैराकृष्यात्मीक्रियन्ते। एवं समर्पणेन स्वीकरणेन च पृथग्गुणधर्मवतां पदार्थानां संरचना भवति। आधुनिकवैज्ञानिकाः ग्राह्यत्वं ग्राहकत्वञ्च क्रमशः–

क. That may be taken from atmosphere

ख. That can be able to adopt some other spectrums in the shape of mass or wave. इत्यर्थयोः परिभाष्येते।

## ४. समवायशक्तिः (Collectiveness)

प्रवाहवतां तरङ्गाणां समवायेन सङ्कलनेन रूपाकारनिर्माणे शक्तिरियं साधिका भवति।

आधुनिकवैद्युतिकीक्षेत्रे प्रवाहः स्फोटजन्य इति स्वीक्रियते। अयं स्फोटः शब्दविवर्तवादिभिः प्रतिपादितः ध्वनिस्फोट एव यो निरन्तरं वर्णानां विवर्तप्रवाहस्य कारणमुक्तः।

उक्तशब्दविवर्तसिद्धान्तं समीक्ष्योर्जायाः पदार्थे पदार्थस्य चोर्जायां रूपान्तरणं वैज्ञानिकाः कर्तुं शक्नुवन्ति। लोके दृश्यते यद्विज्ञानस्य चरमोत्कर्षयुगेऽप्यूर्जायाः पदार्थत्वेनान्तरणं विवर्तनं वा न कर्तुं शक्यते विज्ञानवेत्तृभिः, किन्तु पदार्थस्यैवोर्जायां लयः कर्तुं शक्यते, यथा साधकानां तत्त्वज्ञानां सामर्थ्यमस्ति। अस्मिन् क्षेत्रे आधुनिकप्रयोगाः प्राच्यमतानुसन्धानपराश्चेद् भवेयुस्तर्हि निश्चयेनैव नूतनोपलब्धिरचिरादेव भविता।

---

**सन्दर्भाः–**

१. (बृहदारण्यकोपनिषत् – ५/७/१)

२. (Intigrated Electronics - Jacob. Millman)

३. निरुक्तम् – भूमिका भागः
४. Electronic Components
५. निरुक्तम् (नैघण्टुककाण्डम्) – श्री देवराज यज्वकृतटीका– भूमिका
६. ईशोपनिषद्
७. निरुक्तम् १/११/३२
८. धातुसूत्रम् माधवीयवृत्तिः पृ० ३६०
६. महाभाष्यम्– पश्पशाह्निकम्
१०. तदेव १/२/२/२
११. वर्णोच्चारणशिक्षा – १/२
१२. महाभाष्यम् – पश्पशाह्निकम्
१३. वाक्यपदीयम् ब्रह्मकाण्डम्, ऋक् संहिता १/१६४/४५
१४. निरुक्तम्, बृहददेवता १/ ३६
१५. महाभाष्यम्
१६. वाक्यपदीयम् १/१२०
१७. निरुक्तम् भूमिका
१८. छान्दोग्योपनिषद् १/१/२
१६. बृहदारण्यकोपनिषद् ४/१/२
२०. तैत्तिरीयप्रातिशाख्यम् २२/१–२
२१. वर्णोच्चारण शिक्षा
२२. ऐतरेय ब्राह्मणम् ५/३/१
२३. वाक्यपदीयम् १/१
२४. 'सिद्धे शब्दार्थसम्बन्धे' महाभाष्यम् पश्पशाह्निकम्
२५. अमरकोशः
२६. शुक्लयजुः प्रातिशाख्यम् १/८, १/६
२७. काव्यादर्शः दण्डी
२८. वाक्यपदीयम् १/२२
२६. निरुक्तम् प्रथमोध्यायः
३०. धातुपाठः
३१. ऐतरेयोपनिषद् १/१

३२. वाक्यपदीयम् १/१०२
३३. तदेव–ब्रह्मकाण्डम्
३४. महाभाष्यम्
३५. वर्णोच्चारणशिक्षा
३६. वाक्यपदीयम् १/८१
३७. ऋग्वेद सं. प्रथम मण्डलम्
३८. वा. प. १/१२०
३९. शिवदृष्टिः २/१०
४०. तदेव
४१. छान्दोग्योपनिषद् षष्ठोऽध्यायः
४२. वाक्यपदीयम् १/५५



# व्यक्तित्वविकासे योगमनोविज्ञानम्

भारतीयदर्शनेषु योगस्य प्रतिष्ठा सेश्वरसाङ्ख्यतया क्रियते। सैद्धान्तिकरूपेण यत्साङ्ख्यदर्शनस्य स्वरूपं वर्तते तस्य व्यावहारिकविश्लेषणं योगशास्त्रं करोति। साङ्ख्यदर्शनं दुःखत्रयाभिघातस्यात्यन्तिकोपायतया व्यक्ताव्यक्तज्ञविज्ञानमावश्यकं मन्यते। योगदर्शनं तदर्थं द्रष्टुः स्वरूपेऽवस्थानस्योपायतया चित्तवृत्तेस्तन्निरोधयोश्च व्याख्यां करोति। वस्तुतः साङ्ख्ययोगौ परस्परमुपकारकावन्योऽन्यपूरकौ चेति। एतस्मादेव श्रीमद्भगवद्गीतायामुक्तं 'साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः' इति।

अस्तु। सर्वेषामपि व्यवहाराणां चिन्तनानां पुरुषार्थानाञ्च केन्द्रत्वेन मानव एव साधकोऽतः स एव चेतनतमो ज्ञाता द्रष्टा चेत्युच्यते। सर्वाणि शास्त्राणि निगमागमाः दर्शनानि च मानवव्यवहारस्य विश्लेषणे समीक्षणे च प्रवर्तन्ते इति वस्तुस्थितिः। अनया दृष्ट्या योगदर्शनं सर्वेषामपि भारतीयदर्शनानां सरणावेव तत्त्वचिन्तने प्रवर्तमानमपि लोके दैनन्दिनव्यवहारे यथा प्रसिद्धिमवाप न तथाऽन्यं दर्शनमात्मीकृतम्। तत्रायं हेतुः लक्ष्यते यद्योगसिद्धान्ताः मानवमनोविज्ञानेन व्यक्तित्त्वस्य समग्रविकासेन च साक्षात्सम्बद्धाः दृश्यन्ते।

व्यक्तिविकासः श्रेष्ठविश्वस्य सङ्कल्पनाया आधार इत्यत्र न विप्रतिपत्तिः। परिप्रेक्ष्येऽस्मिन् विचारणीयं यद्व्यक्तिः (व्यष्टिः) समष्टेः मूलम्, समष्टिश्च व्यष्टेः पराकाष्ठा व्यक्तित्त्वविकासस्य परा सीमेति वक्तुं शक्यते। व्यक्तित्त्वविकासे योगस्य भूमिकायाः समीक्षणार्थं सामान्यतः पक्षत्रयस्य विश्लेषणमपेक्ष्यते – व्यक्तिः, व्यक्तित्त्वं, योगश्चेति।

**व्यक्तिः–**

सामान्यतः व्यक्तिः समाजस्य कश्चिदपरिहार्यो घटक इति ज्ञायते। तद्रूपेणैव व्यक्तेः व्याख्या विधीयते। तात्त्विकेऽर्थेऽव्यक्तस्य प्रकाशनं व्यक्तीभावो वा व्यक्तिरिति वक्तुं शक्यते। अस्मिन्नर्थे यद्यपि सृष्टिमात्रं व्यक्तिपदवाच्या स्यात्, किन्तु व्यावहारिकदृष्ट्या महत आरभ्य पञ्चमहाभूतपर्यन्तं प्रकृतेः विकाराणां समुच्चयः चेतनसंयोगाद् चेतनवद्व्यवहरन्व्यक्तिरित्युच्यते। अपरमुखेन प्रकृतिपुरुष–संयोगात्पञ्चकोशात्मके शरीरे स्थित आध्यात्मिकाधिदैविकाधिभौतिकभावैः सम्बद्धो जीवो यदा व्यष्टितया पुरि शरीरे शेते तदा सः व्यक्तिरित्युच्यते।

त्रिगुणपरिणामतया व्यक्तौ ( पुरिशयावस्थायाम् ) गुणत्रयं कदाचिदुद्बुद्धं भवति कदाचिच्च सुप्तं भवति। भावविकासेन सहैव संस्कारादिजन्यत्वाद् गुणविशेषस्याभिभवाद् व्यक्तेः स्वभावो निर्णीयते। तदनुसारेण स्वाभाविक्यः परिस्थितिजन्याश्च प्रवृत्तयो जायन्ते। आधुनिकमनोविज्ञानं स्वाभाविकप्रवृत्तीनामभिज्ञानं मूलप्रवृत्तितया परिस्थितिजन्यप्रवृत्तीनाञ्च निर्णयं संवेगरूपेण करोति। चतुर्दशमूलप्रवृत्तीनां विश्लेषणेन ज्ञायते, यत्सर्वेषु व्यक्तिषु सत्त्वरजस्तमसामनुपातभेदेन विषयाकारेण परिणताः चित्तवृत्तय एव मूलप्रवृत्तिगतव्यवहारे हेतुत्वेन वर्तन्ते।

तत्त्वत एकस्मिन्नेव 'स्व' प्रत्यये चित्तवृत्तिभेदान्नानात्वं जायते। स्वभावतः व्यक्तिः त्रिगुणपरिणाममात्रं भवति, किन्तु वृत्तिप्रभावान्नानाशरीराधिष्ठानं प्राप्य रूपाकारवर्णादिवैशिष्ट्येन नानाविधाः पृथगस्तित्ववन्तः, पृथग्धर्माः, पृथग्व्यवहाराश्च व्यक्तयो दृश्यन्ते। अयं व्यक्तिभेदः पुरुषनानात्वे प्रमाणमिति मनोवैज्ञानिकी दृष्टिः। व्यावहारिकस्तरे व्यक्तिभेदः व्यक्तित्वनिर्णये साधको भवति। वस्तुतः उद्बुद्धाश्चित्तवृत्तयो व्यक्तित्वपरिज्ञाने महत्त्वपूर्णाः भवन्ति। वैयक्तिकस्तरे सामाजिकस्तरे च व्यवहारस्य मूले व्यक्तेः सामान्यं विशिष्टञ्च व्यक्तित्वं भवति। अतो व्यक्तित्वस्य स्वरूपज्ञानमावश्यकम्।

**व्यक्तित्वम्—**

यथा पूर्वं निर्दिष्टं यद्व्यक्तिरव्यक्तस्य परिणामः। अथ व्यक्तेः गुणधर्माणां समष्टिः व्यक्तित्वमिति वक्तुं शक्यते। कस्यचिदपि व्यक्तित्वस्य पक्षद्वयं भवति। एकः पक्षः तस्य स्वभावस्य निर्धारणं करोति, अपरः पक्षश्च व्यवहारं निर्धारयति। उभयोरपि सामञ्जस्यं व्यक्तित्वस्य साफल्यं पूर्णताञ्च द्योतयति। किन्तु जीवने बहवो विक्षेपाः भवन्ति, ये स्वभावव्यवहारयोर्मध्ये सामञ्जस्यनिर्णयेऽवरोधं जनयन्ति। इमे विक्षेपा एव 'क्लेशाः' भवन्ति, ये कुण्ठाहताशादिमनोविकारान् जनयन्ति। व्यक्तित्वविकासेऽवरोधकानि तत्त्वानि मूलतोऽपसार्य पुनश्च व्यक्तिगतस्वभावस्य समष्टिगते 'स्व' भावे लय एव समायोजनस्य परा गतिः। तच्च योगसाध्यम्। किन्तु योगस्य भूमिकायाः निर्णयात्प्राग्व्यक्तित्वस्य सर्वाङ्गीणस्वरूपस्य चर्चाऽप्यावश्यकी।

व्यष्टिस्तरे व्यक्तित्वं मनःशारीरिकघटकानां योग इति वक्तुं शक्यते। त्रिगुणपरिणामक्रमे महदहङ्कारो मनश्चेति त्रयं चित्तभूमेः निर्माणं कुर्वन्ति। एतेषां त्रयाणामेकसंज्ञान्तःकरणरूपेण विधीयते। मनसा युक्तानि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च विषयव्यवहारे बाह्यकरणानि भवन्ति, यतोहि समस्तोऽपि लोकव्यवहार एतैरेवेन्द्रियैः जायते। व्यवहारस्य विषयाः तन्मात्राणि भवन्ति। तत्र च साधनं पञ्चभूतात्मकं शरीरं भवति। वस्तुतः शरीरमेव स्थूलरूपत्वान्महदादीनां व्यक्तौ प्रमाणं भवति। शरीरं विना

हि व्यवहारो वृत्तिश्च नानुमातुं शक्यते। एवं व्यक्तित्वस्यांशत्रयं कस्यचित् त्रिभुजस्य कोणतयाऽन्योऽन्यसम्बद्धं भवितुमर्हति। तच्चैवं दर्शयितुं शक्यते–




**चित्तम्–**

समग्रव्यक्तित्वस्य परिकल्पनमुक्तत्रयाणामन्तःसम्बन्धेन कर्तुं शक्यते। व्यक्तेः मनःशारीरिकसंरचना तदाश्रिता भवति। अत्र व्यवहारपक्षमधिकृत्य चित्तशरीरयोः सापेक्षं विवेचनमपेक्ष्यते। विचारणीयं यत् प्रकृतेः कार्यं महत्तज्जन्योऽहङ्कारोऽहङ्कारजन्यञ्च मन इति त्रयं चित्तसंज्ञकं भवति। तत्राहङ्कार इन्द्रियविषययोः साक्षात्कारणं शरीरस्य च परम्परया कारणं भवति। एवं चित्तं विषयान्प्रति व्यवहारस्य हेतुः शरीरञ्च साधनं माध्यमो वा भवति। उभयोरधिष्ठाता चिद्रूपो जीवात्मा भवति, योऽविद्याजन्य–प्रकृतिसंयोगवशात् त्रिगुणपरिणामं प्राप्य पुरुषपदवाच्यो भवति। चित्तं सर्वेषामपि व्यवहाराणां भूमिर्भवति। चित्तसम्बन्धादेव चिद्रूपोऽपरिणामी आत्मा ज्ञानस्य विषयो भवति। तत्सम्बन्धादेव घटादिविषयाः चिदात्मनो ज्ञानविषयत्वमधिगच्छन्ति। वस्तुतः चित्तमेव विषयाकारतया वृत्तिमद् भवति। एवं चित्तवृत्तिवशाद् ज्ञाता द्रष्टा च पुरुषः ज्ञेयवद् दृश्यवद्वा लक्ष्यते।

विषयज्ञाने करणत्वाच्चित्तमन्तःकरणमित्युच्यते। साङ्ख्ययोगमते–ऽध्यवसायात्मिका बुद्धिरभिमानोऽहङ्कारः सङ्कल्पात्मकं मनश्च चित्तस्य प्रत्यायकाः घटकाः। व्यक्तित्वनिर्माणे चित्तस्य महती भूमिका भवति। त्रिगुणपरिणामत्वाद् बुद्धिरहङ्कारो मनश्चेति त्रिगुणात्मकान्येव भवन्ति। एतानि पृथक्पृथग् समुदितानि च व्यक्तित्वस्य विविधपक्षाणां निर्णयं कुर्वन्ति। आधुनिकमनोवैज्ञानिकाः बुद्धेः सम्बन्धं ज्ञानेनाहङ्कारस्य सम्बन्धमात्मप्रत्ययेन, मनसः सम्बन्धञ्च क्रियया ( व्यवहारेण ) स्थापयित्वा मानवव्यवहारस्य विश्लेषणं कुर्वन्ति।

योगशास्त्रानुसारेण बुद्धौ गुणस्थितिः व्यक्तित्वस्य निर्धारणं करोति। सत्त्वप्राधान्याद् धर्मज्ञानवैराग्यैश्वर्याः इति बुद्धेः प्रकृष्टगुणाः प्रकाश्यन्ते।

रजस्तमःप्राधान्यादधर्माज्ञानावैराग्यानैश्वर्या इति निकृष्टगुणाः प्रकाश्यन्ते। मनोवैज्ञानिकस्तरे धर्मादयो गुणाः प्रज्ञामेधासमायोजनादिक्षमताः विकास्य

व्यक्तित्वस्योत्कृष्टरूपस्य प्रत्यायकाः भवन्ति। एतद्विपरीतमधर्मादयो गुणाः व्यक्तित्वस्य हेयस्वरूपं ज्ञापयन्ति।

अहङ्कारोऽहमस्मि इत्यात्मप्रत्ययः ( self ) अभिमानो वेति। सत्त्वप्राधान्य–वशादहङ्कारो वैकारिकः ( परिणामी ) भवति। रजः–प्राधान्यात्तैजसस्तमःप्राधान्याच्च भौतिको भवति। राजसोऽहङ्कार एकादशेन्द्रियाणां कारणं भवति। तामसो–ऽहङ्कारस्तैजसांशेन सह प्रवृत्तिधर्मणां तन्मात्राणां कारणं भवति। व्यक्तित्वस्य स्वरूपनिर्धारणेऽहङ्कार इन्द्रियाणां विषयग्राहकताशक्तेः, तद्ग्राहकैः स्थूलावयवैः सह तेषां सहसम्बन्धस्य च निर्णायको भवति। मनसा सम्बद्धोऽहङ्कारः इच्छाशक्तेः बलाबलस्य हेतुर्भवति। इच्छाशक्तेस्तीव्रतायाः प्रभाव इन्द्रियाणां विषयग्राहकतायाः गतौ भवति। एतस्मादेव शब्दादिविषयाणां ग्रहणे व्यक्तिगतभेदाः दृश्यन्ते।

सङ्कल्पात्मकं मनोऽहङ्काररूपेणात्मप्रत्ययेन सम्बद्धं सदनुभूतौ साधकं भवति। मनो बुद्ध्या संयुक्तं धर्मादेः प्रत्यायकं भवति, ज्ञानेन्द्रियैः सह संयुक्तं बाह्यविषयाणां ज्ञाने साधकं भवति, कर्मेन्द्रियैः संयुक्तञ्च विषयाणां ग्रहणे साहाय्यं करोति। एवं मनस उभयकरणत्वमुभयेन्द्रियत्वञ्च प्रतिपद्यते। इन्द्रियाणां व्यवहारेऽन्तःकरणवृत्तिः चित्तवृत्तिर्वा कारणं भवति। तत्र मनसो वृत्तिः चित्तापेक्षयान्तर्मुखी विषयापेक्षया च बहिर्मुखी भवति। व्यक्तित्वस्य स्वस्थविकासाय मनस उभयोः रूपयोः समतोलनं सामञ्जस्यञ्चावश्यकं भवति। एतस्मादेव 'तन्मे मनः शिवसङ्कल्पमस्तु' इति यजुर्वेदे प्रार्थना कृता। मनो वस्तुतोऽन्तःकरणबाह्यकरणयोः तुलायाः मध्यदण्ड इति वक्तुं शक्यते। विषयाणां गुरुत्वान्मनः स्वभावतस्ताननुधावति, येन गुरुत्वाभिमुखं तुलादण्डवदसन्तुलितं भवति व्यवहारेऽसामञ्जस्यसम्भावना च बलवती भवति। अतः व्यक्तित्वस्योच्चोच्चतरविकासाय मनसोऽहङ्कारेऽहङ्कारस्य च बुद्धौ प्रतिष्ठापनं चित्तवृत्तीनामस्थैर्यमपाकरोति। योगदर्शनमवस्थामेनां 'चित्तवृत्तिनिरोधरूपो योग' इति परिभाषयति।

व्यावहारिकस्तरे एकाधिष्ठाने चित्तस्य लयः ( एकाग्रता ) एव निरोधस्याभिप्रायः। आधुनिकमनोविज्ञानमप्येकाग्रतायाः महत्त्वं व्यक्तित्वस्य विकासाय दृढं प्रतिपादयति। अस्तु। अस्य विषयस्य चर्चायाः प्राक् चित्तवृत्तेः स्वरूपं ज्ञातव्यं, यतोहि वृत्तिः व्यवहार एव। विषयाकारतया चित्तस्य वर्तनमेव वृत्तिः। तदनुसारेण वृत्तयोऽनन्ताः भवितुमर्हन्ति, याः नानाव्यवहारस्य कारणत्वेन कल्प्यन्ते। किन्तु चित्तभूम्यनुसारेण पञ्चतय्यः वृत्तयो वर्गीकृताः।

अवस्थाभेदेन चित्तं पञ्चधा भवितुमर्हति –

**क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धञ्च।**

तत्र क्षिप्तं चित्तं रजोगुणस्याधिक्याच्चञ्चलमस्थिरञ्च भवति। बहिर्मुखत्वादेतत्सुखदुःखादिविषयेषु स्वतः प्रवर्तते। लोके सामान्यजनस्य चित्तं प्रायः क्षिप्तं विक्षिप्तं वा भवति। श्रीमद्भगवद्गीतायामर्जुनः यस्य मनसश्चञ्चलत्वं प्रतिपादयति, तत्क्षिप्तचित्तमिति वक्तुं शक्यते। क्षिप्तं मनः रजसा विषयेष्वेव वृत्तिमद् भवति (योगवार्तिकम् पृष्ठ–८) । किन्तु कुरुक्षेत्रे स्थितोऽर्जुनो विक्षिप्तचित्तस्यावस्थायां वर्तते। क्षिप्तचित्तस्य विशिष्टावस्था विक्षिप्तमित्युच्यते। अस्यामवस्थायां चित्तं स्थैर्यास्थैर्ययोर्मध्ये दोलायते। कदाचिद्रजःप्राधान्यादस्थिरं भवति, कदाचिच्च सत्त्वप्राधान्यात् स्थिरं भवति। यथोक्तं तत्त्ववैशारदीकारेण–

**क्षिप्ताद्विशिष्टं विक्षप्तम्। विशेषोऽस्थैर्यबहुलस्य कादाचित्कः स्थेम।**

तत्त्ववैशारदी १/१

योगवार्तिककारः विक्षिप्तचित्तस्य स्वरूपं निम्नोद्धृतप्रकारेण निरूपयति–

**क्षिप्ताद्विशिष्टं विक्षिप्तम्, सत्त्वाधिक्येन समादधदपि चित्तं रजोमात्रयाऽन्तरा विषयान्तरवृत्तिमद्।**

योगवार्तिकम्–पृ०८

आधुनिकमनोविज्ञाने विक्षिप्तचित्तस्यावस्थाद्वयं मूलप्रवृत्तिसंवेगरूपेण च प्रतिपाद्यते। मूलप्रवृत्तिः चित्तस्य स्थिरो भावः संवेगश्चास्थिरो भाव इति वक्तव्यम्। तमःप्राधान्याद्विवेकशून्यं चित्तं मूढं भवति। योगवर्तिककारः 'तमसा निद्रावृत्तिमच्चित्तं मूढम्' इति प्रतिपादयति(योगवार्तिकम्–पृ–८ )। मूर्च्छादिव्यापारवच्चित्तं मूढमित्युच्यते। आधुनिकमनोविज्ञानसम्मतं जडं मनोऽस्य समकक्षावस्थेति वक्तुं शक्यते।

**एकस्मिन्नेव विषयेऽग्रे शिखा यस्य चित्तदीपस्येत्येकाग्रं, विशुद्धसत्त्वतयैकस्मिन्नेव विषये वक्ष्यमाणावधीकृतकालपर्यन्तमचञ्चलं निवातस्थदीपवत्। तथा च क्षिप्तादित्रयेऽपि किञ्चिदैकाग्र्यसत्त्वेऽपि तत्र नातिप्रसङ्गः।**

योगवार्तिकम्–पृ–८

व्यावहारिकस्तरे एकाग्रावस्थायां चित्तमेकस्मिन्विषये केन्द्रितं भवति। विषयाणामवधारणार्थं चित्तैकाग्र्यस्यावश्यकता लोकेऽनुदिनमनुभूयते। निरुद्धावस्थायां सकलानां वृत्तीनां संस्कारमात्रं शेषं भवति–

**निरुद्धञ्च निरुद्धसकलवृत्तिकं संस्कारमात्रशेषमित्यर्थः।**

योगवार्तिकम् पृ०–८

अस्यामवस्थायां बाह्यविषयाणामेकाकारवृत्तिरन्तर्मुखी भवति। सर्वेषामपि विषयाणामेकस्मिन्नधिष्ठाने लयो भवति निरुद्धचित्तस्य। योगदर्शन एताश्चित्तभूमयः

साधनदृशा साधकस्य चित्तस्य विविधान् क्रमान् द्योतयन्ति। यथा क्षिप्तमूढचित्तभूम्योः व्युत्थानं, विक्षिप्तचित्ते समाधेः बीजमेकाग्रचित्ते स्थैर्यं, निरुद्धे च योगलक्षणपरिणामो दृश्यते।

मनोवैज्ञानिकस्तरे चित्तभूमीनामुक्तक्रमो व्यक्तित्वविकासस्य सोपानन्येवेति वक्तुं शक्यते। क्षिप्तमूढावस्थयोः व्यक्तिः जडवद्व्यवहारं करोति। येषां चित्तस्य विकासोऽवरुद्धो भवति, ते सामान्यव्यवहारं न कर्तुं शक्नुवन्ति। अत्रोल्लेखनीयं यत्सामान्यव्यवहारस्य प्रमाणं समाजो ( समष्टिः ) भवति। 'यस्मान्नोद्विजते लोकः लोकान्नोद्विजते च यः' इति श्रीमद्भगवद्गीतायाः वचनाद् व्यक्तिसमाजयोः व्यष्टिसमष्ट्योः यदन्योऽन्योपकारकत्वं प्रतिपादितं, तदेव सामान्यव्यवहारस्यादर्शः। विक्षिप्तः कदाचित्सामान्यं व्यवहारं करोति कदाचिच्चासामान्यम्। अनिश्चयादियं दशा सर्वाधिकमुद्वेगकरी भवति। मनोवैज्ञानिकदृष्ट्योपचारमपेक्षते। एकाग्रचित्तं सामाजिकसमायोजने साधकं भवति, किन्तु निरुद्धचित्तं वैश्विकस्तरे समायोजनस्य परा स्थितिः इति वक्तुं शक्यते। यत्र 'इदम्' 'अहम्' 'आत्म' इति सर्वेऽपि प्रत्ययाः एकरूपतां दधति।

चित्ते निरुद्धे सति जडे वा चेतने वा, शुनि वा श्वपाके वा, आत्मनि वा परे वा सर्वत्र समभावो जायते। समत्वभावेन व्यवहरन्साधकः सर्वभूतहिते रतो भवति। अस्यामवस्थायां सर्वथा सात्त्विकगुणाः श्रेष्ठगुणाश्च जायन्ते। तादृशाः साधकाः व्यष्टिसमष्ट्योरभेदं कल्पयन्तः व्यवहारस्योच्चतमां भूमिं प्राप्नुवन्ति। जीवात्मपरमात्मनोः संयोगरूपयोगस्य पूर्वभूमिरियं 'समत्वयोग' इत्युच्यते, यस्याधारः क्रियायोगो भवति। एतासु चित्तभूमिषु प्रमाणविपर्यय विकल्पनिद्रास्मृतय इति पञ्चतय्यश्चित्तवृत्तयो भवन्ति। चित्तं यया यया वृत्या वर्तते, सा सा तन्नाम चित्तवृत्तिर्भवति। अपरमुखेन वक्तुं शक्यते, यन्नानाविषयाकारवशात्परिणतं चित्तमेव व्यवहारस्य हेतुः भवति। ताश्च वृत्तयः क्लिष्टाक्लिष्टा इति द्विधा भवन्ति। उभयथा वृत्तिभ्यः संस्काराः जायन्ते। एवं वृत्तिसंस्कारयोश्चक्रानुक्रमः मनोवैज्ञानिकस्तरे व्यक्तेः वंशानुक्रमागतगुणान् वैयक्तिकस्वभावञ्च निर्धारयति।

क्लिष्टाश्चित्तवृत्तयो लोकव्यवहारस्य हेतुत्वात्सामाजिकसमायोजने सहायिकाः भवन्ति। अक्लिष्टाः वृत्तयः सत्त्वाधिक्यादुच्चसाधनाभूम्या सम्बद्धाः भवन्ति। वैयक्तिकस्तरे क्लिष्टाक्लिष्टाश्चित्तवृत्तयो व्यक्तित्वस्य सामान्यविशेषगुणानां निर्णयं कुर्वन्ति। उदाहरणार्थं प्रमाणं (**cognition**) ज्ञानस्य स्तरं निर्धारयति। एवमेव विपर्ययः (**illusion**), विकल्पः (**imagination** ) इत्यादि स्तरभेदेन व्यक्तित्वभेदं घटयन्ति।

**चित्तव्यवहारयोः सम्बन्धः**

उपर्युक्तपङ्क्तिषूल्लेखः कृतो यच्चित्तभूमयस्तद्वृत्तयश्च व्यवहारे हेतुर्भवन्ति।

एवं व्यवहारानुसारेण व्यक्तित्वस्य पक्षद्वयं प्रतिपद्यते– सामान्यं विशेषञ्चेति। एतस्मादेव कस्यापि व्यक्तेः व्यक्तित्वे केचित्सामान्यगुणाः भवन्ति केचिद्विशेषगुणाश्च। तदनुसारमेव व्यक्तेः व्यवहारोऽपि द्विधा भवति–सामान्यो विशेषश्चेति। चित्तस्वरूपनिर्धारकाणां त्रिगुणानामन्योऽन्याभिभवाद्व्यावहारिकस्तरे पुरुषस्य स्वभावो निर्धार्यते। उदाहरणार्थं– क्षिप्तचित्तभूमेः प्राधान्यात्कश्चिद्व्यक्तिः अस्थिरचित्तः सुखेप्सुः विलासिताप्रियः शिथिलसङ्कल्पश्च भवितुमर्हति। विक्षिप्तचित्तभूमेः प्राधान्ये सति कश्चिद– निर्णयात्मकव्यक्तित्ववान् भवति। एतादृशे व्यक्तावात्मविश्वासस्याभावो भवति। एवमेव मूढः प्रायः निर्णयेषु परावलम्बी भवति, विषयाणां स्पष्टं प्रतिबिम्बमेतेषां चित्ते न जायते।

यस्यैकाग्रा चित्तभूमिर्भवति, स विषयेष्वधानं कर्तुं क्षमो भवति। एतादृशो व्यक्तिः निश्चितलक्ष्यं स्वीकृत्य दृढसङ्कल्पेन यदिच्छति तत्कर्तुं शक्नोति। निरुद्धचित्तभूमौ स्थितो व्यक्तिः प्रायः सङ्कल्पवान् कुशाग्रः विषयेषु केन्द्रीकृत– चित्तोऽप्यन्तर्मुखी भवति। एवमेव प्रमाणादयश्चित्तवृत्तयो व्यक्तेः व्यवहारं निर्धारयन्ति।

**चित्तशरीरयोः सम्बन्धः**

बाह्यकरणानां कर्मेन्द्रियज्ञानेन्द्रियाणां समुदायः शरीरमुत्पाद्यविनाशशालि भोगायतनञ्चेत्युच्यते। वस्तुतः चित्तं विना शरीरस्यास्तित्वं न भवितुमर्हतीति योगदृष्टिः, यतोहि चित्तं विना तैस्तैरिन्द्रियैः विषयाणां भोगः कर्तुं न शक्यते। बुद्ध्यहङ्कारमनसां योगश्चित्तमित्यभिधीयते। त्रयाणामपि चित्तसंज्ञा चित्सम्बन्धाद् भवति। चिदेवान्तःकरणबाह्यकरणयोः सम्बन्धे हेतुर्भवति। अस्मिन्नर्थे श्रीमद्भगवद्गीतायां शरीरं क्षेत्रमित्युक्तम्–

**इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।**

श्रीमद्भगवद्गीता– १३/२

क्षेत्रपदवाच्यमिदं शरीरं वस्तुतः जीवच्छरीरमेव, यतोहि महाभूतान्यहङ्कारो बुद्धिरव्यक्तप्रकृतिः एकादशेन्द्रियाणि तद्विषयाश्च पञ्चतन्मात्राणीति सर्वं क्षेत्रमित्युक्तम्–

**पञ्चभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च।**
**इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः।।**

तदेव–१३/५

इच्छा द्वेषः स्थूलशरीरं ( सङ्घातः ) बुद्धिः स्थिरता च समासेन क्षेत्रस्य विकाराः उक्ताः–

**इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः।**
**एतत्क्षेत्रं समासेन सविकारमुदाहृतम्।।**

तदेव–१३/

व्यक्तित्वनिर्माणे शारीरिकसङ्घटनस्यापि महती भूमिका भवति। तच्च शरीरं त्रिविधमुक्तं–कारणशरीरं सूक्ष्मशरीरं स्थूलशरीरञ्चेति। एतैस्त्रिविधैः शरीरैः व्यक्तेः प्रकृतिः, मनोवृत्तिः, स्वभावः, शारीरिकसङ्घटनञ्च निर्धार्यते। व्यक्तितत्त्व–विकासस्योच्चतमभूमिमवाप्तुमिच्छादीनां मनोभावानां शुभसङ्कल्पवत्त्वमावश्यकं, यतोहि, शुभसङ्कल्पवच्छुद्धं निर्मलञ्च चित्तं शारीरिकावयवसंस्थानस्यानामयार्थमावश्यकम्। शरीरस्य स्वस्थता च चित्तस्यैकाग्रतायै निरोधाय चावश्यकी। स्मरणीयं यद्व्यवहारतः सर्वेषां विषयाणामेककेन्द्रे लयो निरोध इत्युच्यते। एवं मनोवैज्ञानिकस्तरे स्वस्थं मनः शरीरसङ्घातस्य विकासायावश्यकं, स्वस्थशरीरे च स्वस्थं मनः (चित्तं) तिष्ठतीति स्वीक्रियते।

## पूर्णव्यक्तित्वाय योगः

वैयक्तिकस्तरे मनःशारीरिकक्षमतानां सर्वाङ्गीणविकासः समष्टिस्तरे च तत्तत्क्षमतानां सार्वभौमचेतनार्थं समर्पणं योग इत्युच्यते। प्रथमे स्तरे सः क्रियायोग इत्युच्यते, द्वितीये स्तरे च समत्वयोग इत्युच्यते। उभयोः योजकश्च ज्ञानयोग इति। मार्गस्तत्राष्टाङ्गयोगः। येन योगाग्निमयं शरीरं प्राप्य रोगो जरा मृत्युश्च न भवन्ति। यथा श्वेताश्वतरोपनिषद्युक्तम्–

**न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम्।**

श्वेताश्वतरोपनिषत् २/१२

मृत्युरिति शब्दोऽत्राकालमृत्योः बोधको मन्तव्यः। अनामयेन गृहीत–विषयैरिन्द्रियैर्युक्तेन शरीरेण युक्तस्य पुरुषस्य शिवसङ्कल्पात्मकं मनस्तत्सम्बन्धेन बुद्धिरहङ्कारश्चाप्यमानित्वमदम्भित्वमहिंसाक्षान्तिरार्जवमाचार्योपासनं,शौचं, स्थैर्यमात्मविनिग्रह इत्येतैः गुणैः 'सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि' इत्यपरोक्षानुभवेन युज्यन्ते। अयमस्पर्शयोगः, यस्यामवस्थायां मनसोऽमनीभावो जायते। माण्डूक्य–कारिकायामेषाऽद्वैतस्य स्थितिर्मता–

**मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते।**

मा० का० ३/३१

एषा स्थितिर्द्वैताभावस्य भवति न त्वद्वैतानुभूतेः। अयमेव जीवात्म–परमात्मनोः संयोगरूपो योगः। तात्त्विकस्तरे पुंप्रकृत्योर्वियोगरूपोऽसौ योग इति राजमार्तण्डवृत्तिकारः,

किन्तु व्यावहारिकस्तरे शीतोष्णसुखदुःखेषु मानापमानयोः लोष्ठाश्मकाञ्चनेषु सुहृन्मित्रारिषु साधुषु पापेषु किं बहुना, सर्वत्रैव समबुद्धिः सर्वमेवैकदृष्ट्या पश्यन् यः 'दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः वीतरागभयक्रोधः स्थिरधी'र्भवति, स एव व्यक्तित्वस्य पूर्णतां प्राप्नोति। स एव विश्वकल्याणस्य रहस्यं ज्ञातुं शक्नोति। स एव सामाजिक–समायोजनस्योच्चतमां भूमिं प्राप्तुमर्हति। समत्वयोगे स्थितो नर इह जीवने कुण्ठाहताशादिमनोविकारेभ्यो दूरे तिष्ठति। समत्वयोगस्य स्थितिः क्रियायोगेन प्राप्तुं शक्यते, या तपःस्वाध्यायेश्वरप्रणिधानैः सम्भाव्यते–

**तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः।**

योगसूत्रम् २/१

वस्तुतः क्रियायोगः कर्मयोगस्य मन्त्रः, कर्मयोगश्च समत्वयोगस्य साधनमिति वक्तुं शक्यते। समासेन तपश्चित्तप्रसादनं स्वाध्यायः प्रणवादिपवित्राणां मन्त्राणां जप ईश्वरप्रणिधानञ्च सर्वेषामपि कर्मणां ब्रह्मार्पणमित्युक्तम्। पतञ्जलिः 'समाधिभावनार्थः क्लेशतनूकरणार्थश्च' इति सूत्रेण क्रियायोगस्य फलं कथयति। मनोवैज्ञानिकस्तरे क्रियायोगेन सर्वथा मानसिकस्वास्थ्यस्य रक्षा भवितुमर्हति। स्वस्थचित्तेन कर्मसु कौशलमायाति, तेन चात्मविश्वासः मनोबलमिच्छाशक्तिः नैतिकतापरोपकारादयो गुणाश्च विकसिताः भवन्ति। चित्तस्य प्रसादेन शरीरस्य स्नायुतन्त्रमपि सर्वानवयवान् सम्यक् सञ्चालयति।

उक्तदृष्ट्या मनोवैज्ञानिकरूपेणापि योगस्य स्वरूपं व्यापकं वर्तते। तात्त्विकस्तरे चित्तवृत्तिनिरोधरूपो योगो द्रष्टुः स्वरूपेऽवस्थानस्य हेतुरित्युक्तः–

**तदा द्रष्टुः स्वरूपेऽवस्थानम्।**

योगसूत्रम् १/२

स 'च वृत्तिनिरोधश्चित्तस्य वृत्तिसंस्कारशेषावस्था इति योगवार्तिककारः। अभ्यासवैराग्यौ तत्र साधनम्। व्यासभाष्ये चित्तस्य रूपद्वयमुक्तम् –एकं रूपं कल्याणाय भवत्यपरञ्च पापाय भवति। वैराग्येण विषयस्रोतः खिलीकृत्य विवेकदर्शनाभ्यासेन विवेकस्रोतस उद्घाटनं चित्तवृत्तिनिरोधायावश्यकम्–

**चित्तनदी नामोभयतो वाहिनी। वहति कल्याणाय वहति पापाय च। या तु कैवल्यप्राग्भारा विवेकविषयनिम्ना सा कल्याणवहा, संसार प्राग्भाराऽविवेकविषयनिम्ना पापवहा। तत्र वैराग्येण विषयस्रोतः खिलीक्रियते, विवेकदर्शनाभ्यासेन विवेकस्रोत उद्घाट्यत इत्युभयाधीनचित्तवृत्तिनिरोधः।**

व्यासभाष्यम् १/१२

अत्रोल्लेखनीयं यत्सकला अपि व्यवहाराः, क्रियाः, कर्माणि, चिन्तनं, सिद्धान्ताश्च

मानवस्योच्चतमविकासायैव कल्प्यन्ते। स एव निःश्रेयसापवर्गमोक्षकैवल्यादिपदैर्बोध्यते। सर्वेषामपि दार्शनिकसिद्धान्तानां मूले वस्तुतः व्यष्टेः समष्टौ समाधानमेवेति वक्तुं शक्यते। योगस्य सर्वेऽर्थास्तत्रैव पर्यवसन्ति। युजिर् योगे इत्यर्थे उभयोः संश्लेषणात्मकसम्बन्धः, युज संयमने इत्यस्मिन्नर्थे समष्ट्यपेक्षया व्यष्टेः संयमनमनुशासनं योगः, युज समाधौ इत्यस्मिन्नर्थे च व्यष्टेः समष्टौ समाहारो योग इति।

भारतीययोगमनोविज्ञाने वैराग्यस्य व्यावहारिकतात्पर्यं विषयेभ्यश्चित्तस्य निःस्पृहत्वं भवति। तच्च दीर्घकालनैरन्तर्यसत्कारासेवितेनाभ्यासेन दृढं भवति। समस्तेऽपि जडचेतनात्मके समष्टौ ( मानवसमाजे प्राणिसम्बन्धे ब्रह्माण्डीयपर्यावरणे च ) 'स्व' प्रत्ययस्य ज्ञानं वस्तुतः व्यक्तेरात्मनः स्थितेः प्रत्यभिज्ञानमेवेति वक्तुं शक्यते। लोकादात्मनोऽपेक्षामात्मनश्च लोकस्यापेक्षां विवेकपूर्वकं विज्ञाय तदनुकूलो व्यवहारः नूनमेव काञ्चिद् भौतिकीं सांस्कृतिकीमाध्यात्मिकीं चेतनां स्फुरयति। अभ्यासेन च व्यक्तित्वस्य लक्ष्यपरकनिर्माणे साहाय्यं भवति। एतदेव योगमनोविज्ञानस्य लौकिकं साध्यम्।

निष्कर्षतो वक्तुं शक्यते, यद्योगेन व्यक्तित्वस्य पूर्णविकासस्य पक्षद्वयं भवति – व्यक्तिगतस्तरे भौतिकाध्यात्मिकशक्तीनां विकासः, तन्माध्यमेन च विश्वबन्धुत्व– मात्मवत्सर्वतो दृष्टिः विश्वकल्याणस्य चरमसंवेदना चेति गुणानां विकासेन सार्वभौमचेतनायां चित्तस्य लयो भवति, तस्यामवस्थायां स्वपरयोः भेदवृत्तिः समाप्यते। वर्तमानविश्वे परिवर्त्यमानेषु जीवनमूल्येषु जीवनस्य भौतिकपक्षस्य महत्त्वमधिकं स्वीक्रियते लोकेन। व्यक्तित्वस्यैकाङ्गिविकासवशादधिकांशतो मनोविकारैः ग्रस्ताः जना असामान्यव्यवहारं कुर्वन्तः सन्ति। अस्यामवस्थायां योगमनोविज्ञानं महदुपयोगीत्यत्र नं सन्देहः। भारतीययोगस्य व्यावहारिकप्रशिक्षणेन व्यक्तित्त्वस्य सर्वाङ्गीणविकासो भवितुमर्हति।



# ब्रह्माद्वैतविमर्शः

भौतिकविज्ञानानां चरमोत्कर्षयुगेऽस्मिन्नेकत आश्चर्यदर्शी चिन्तनपरो मानवः ज्ञानपिपासा–शमनाय भौतिक–पदार्थजगतः सूक्ष्मतममुपादानमनुसन्धीयमानो–ऽनन्ततारानक्षत्रग्रहोपग्रहाकाशगङ्गाभिः समुपेतमन्तरिक्षमुद्भिद्य ब्रह्माण्डस्य पराकाष्ठां प्राप्तुं कृतप्रयत्नोऽस्त्यपरतश्च परमाणुशक्तेः सैन्योपयोगपरामुपलब्धिं विकासस्तरं मन्यमानस्तत्र मिथ्याशान्तिञ्चान्वीक्षमाणः, मानवीय–मूल्यानां हननकल्मषेण दूषित ईर्ष्याद्वेषासहिष्णुतापूर्णस्वार्थनीतिमवधार्य वैयक्तिकसुखमेव सर्वोपरि मन्यमानस्तद्व–देवाचरति।

एकं विश्वमित्येकसंस्कृतिरिति चास्माकं पूर्वजानां मनीषिणां सार्वभौम–हित–चिन्तनस्य परिकल्पना भौतिकोपभोगप्रधानव्यावसायिकसभ्यतया ''हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्'' इव तिरोहिता दृश्यते। वैश्वीकरणस्याधार एव विकृतः परिलक्ष्यत इदानीम्। 'बहुजनसुखाय' 'बहुजनहिताय' इति समष्टिगताभ्युदयस्याध्यात्मिकी चेतना ह्रासमुपगच्छन्ती अस्ति। मानवजातेः दीर्घकालीन–विकास–परम्परायामन्तराय इवापतितो दृश्यते।

सन्दर्भेऽस्मिन् भारतीयचिन्तनसरणेः विविधपक्षेष्वनुचिन्तनस्यावश्यकता वर्तते। अस्मिन् क्रमे दार्शनिक–चिन्तनस्य व्यावहारिकपक्षो विचारणीयः। समस्तमपि वैदिकवाङ्मयमुपनिषदः ब्रह्मसूत्रादिकं दर्शन–साहित्यम्, महाभारतरामायणा–दीतिहासकाव्यमन्यच्च सर्वमपि लौकिकसंस्कृतसाहित्यं स्वस्वप्रतिपाद्यविषयव्याजेन यस्य धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयस्यानुशंसनं कृतवदस्ति, तन्मूलं लोकव्यवहारमतिरिच्य नास्ति किञ्चिदन्यत्।

मोक्षशास्त्रतया प्रसिद्धं वेदान्तदर्शनं, तत्रापि ब्रह्माद्वैतं पराविद्यायाः प्रकाशकं किञ्चिद् गूढं गभीरं रहस्यमयं तत्त्वं प्रतिपादयतीति मतिः पारम्परिकरूपेण प्रथितास्ति। 'ब्रह्म सत्यं जगन्मिथ्या' 'जीवो ब्रह्मैव नापरः' 'सर्वंखल्विदं ब्रह्म' 'नेह नानास्ति किञ्चन' 'ब्रह्मविद् ब्रह्मैव भवति' 'तत्त्वमसि' इत्यादीनि नैकानि श्रुतिवाक्यानि तस्याः

ब्रह्मविद्यायाः तात्पर्यबोधाय व्याख्याय्यन्ते। एवं ब्रह्मणः स्वरूपं विविधं प्रतिपाद्य तस्य नित्यत्वमखण्डत्वमेकत्वं निरवयवत्वं निर्गुणत्वं चेतनत्वं शुद्धत्वं बुद्धत्वं निर्विकल्पत्वमित्यादीन् धर्मानुल्लेख्य भूयस्तस्यानिर्वचनीयत्वमुपपादितमाचार्यैः। तात्पर्यं खल्विदं यत्सर्वेऽप्येते धर्मा उपलक्षणमात्रं न वास्तविकाः। सर्वब्रह्ममयत्वं नूनमनुभवगम्यम्। अनुभूयमानायाञ्च स्थितौ तादात्म्यत्वादनिर्वचनीयत्वम् भवतीत्यभिप्रायः। तद्ब्रह्मण उक्तस्वरूपस्य व्याख्यानेऽस्ति वा कश्चिद् व्यवहारिको हेतुः सर्वस्यापि हि चिन्तनस्य सार्थकत्वं व्यवहारेणैव सिध्यते।

अनया दृशा सर्वेषामप्युपनिषद्वाक्यानां व्यावहारिकतात्पर्यं 'सर्वं खल्विदं ब्रह्म' इत्येव महावाक्यम्। इदं वस्तुतो लोकव्यवहारस्यार्थवाद इति वक्तुं शक्यते। कथमिति प्रश्ने सति किञ्चिद् विस्तरेण ब्रह्माद्वैतस्य तात्पर्यं विचारणीयम्।

**सत्यस्यानिर्वचनीयत्वम्–**

मानवीयचिन्तनं प्रायः रूपद्वये विकासमेति–स्थूलतः सूक्ष्मं, सूक्ष्मतश्च स्थूलम्। स्थूलजगतः दर्शनेन तन्मूले सूक्ष्मानुसन्धाने चिन्तनस्यावरोहिक्रमः व्यवह्रियते, सूक्ष्मतममज्ञातकारणभूतं किमपि तत्त्वं प्रतिज्ञाय तस्य विस्तारदर्शनञ्चारोहिक्रम इत्यवधार्यते। तत्र वैज्ञानिकचिन्तनपद्धतिः प्रथमक्रममाश्रयते, दार्शनिकपद्धतिश्च द्वितीयक्रममवधारयते। परिणामतोऽनन्तब्रह्माण्डस्य दृश्यमानजगता सम्बद्धमध्ययनं कुर्वाणाः भौतिकप्रयोगसाधकाः वैज्ञानिकाः सूक्ष्मतमं मूलतत्त्वं द्रष्टुं ज्ञातुं च मूलकणानां विखण्डनं कृत्वा परमाणुं मूलकणं स्वीकुर्वन्ति। स च परमाणुः वैज्ञानिकमते घटकत्रयान्वितः सन् परिभाषिकपरमाणुत्वं दधाति न याथार्थ्यम्, यतोहि निरन्तरं परमाणुविखण्डनस्य क्रमः प्रचलत्येव। पाजिट्रान इत्याख्यस्य घटकस्यानुसन्धानं तस्यैव फलमस्ति। अतः निरतिशयसत्यस्यान्वीक्षणं ज्ञानञ्चाद्यापि विज्ञानकोशे नास्ति। नेति नेतीत्यौपनिषदं मतं तत्र प्रमाणम्। उक्तं हि पञ्चदशीकारेण ''**सत्यं च बाधराहित्यमिति**'' एवं केनापि शब्देन चरमसत्यं परिभाषितुं न शक्यते। अद्वैतवेदान्तमतं तत्त्रिकालाबाधितंसत्यं ज्ञानमात्रावगम्यत्वादनन्तमनिर्वचनीयं ब्रह्म पदवाच्यमिति प्रतिपाद्य तस्यापरिमेयत्वं बोधयति। व्यष्टितया तदणुः समष्टितया च ब्रह्माण्डमित्यवगन्तव्यम्।

सत्यप्यनन्ते जडचेतनात्मके जगति पदार्थप्रकाशकं ज्ञानमेवात एव ब्रह्मणः ज्ञानस्वरूपत्वमिति श्रुतिवचनस्याभिप्रायः प्रतीयते ''सत्यं ज्ञानमनन्तं ब्रह्मेति।'' ब्रह्माद्वैतं सर्वत्र ब्रह्मानुभूतिः, सा च वस्तुतः ज्ञानस्य पराकाष्ठा परागतिश्च। एतद्दृशा ब्रह्मजिज्ञासा

ब्रह्मसाक्षात्कारस्य प्रथमचरणम्। ज्ञानेच्छा यदा क्रियारूपे विवर्तते तदा 'ब्रह्म सत्यम् जगन्मिथ्या' इत्यवगमः ब्रह्मसाक्षात्कारस्य द्वितीयचरणतया प्रतिभासते। जगत् नित्यब्रह्मणो विवर्तो गतिमत्त्वाच्च क्षरस्वरूपं भवति तच्चानुक्षणं परिणामितया बाधराहित्याभावान्न सत्यमिति वक्तुं शक्यते। व्यवहारगम्यत्वाच्चानुभूयतेऽतः नासत्यं वक्तुं शक्यते। एतस्मादेव सदसद्विलक्षणत्वात्तस्य मिथ्यात्वं प्रतिपाद्यते। जीवः स्वभावेन ब्रह्मैव नापरः। एवमेकमेव सन्मात्रं प्रयोजनवशाज्जगद्रूपेण जीवरूपेण च विवर्तते।

## विवर्तस्य भौतिकतात्पर्यम्

अद्वैतवेदान्तस्य विवर्तप्रत्ययस्याधारः नितरां वैज्ञानिकोऽस्ति। सतः वस्तुतोऽंशद्वयं वर्तते सत्ता चैतन्यञ्च। विवर्तकाले सदंशस्य जगत्परिणामः चैतन्यांशस्य च जीवपरिणामो भवति। चैतन्यवशादेव जीवस्य सापेक्षिकं स्वातन्त्र्यं व्यवहारतया दृश्यते। सिद्धान्ततः जगत्यपि ब्रह्मरूपत्वम् चैतन्यं भवति जीवेऽपि च जडत्वं भवति। व्यवहारे चैतन्यमेव कारणं भवति। एतद्दृशा चैतन्यापेक्षया ब्रह्मचैतन्यं जीवचैतन्यं जगच्चैतन्यञ्चेति व्यवहारः क्रियते।

एतच्चैतन्यं तत्त्वत ऊर्जारूपं भवति, तच्च समस्तस्यापि भौतिकरासायनिकक्रिया–प्रतिक्रियायाः कारणं भवति। अणुमात्रे त्रिधा चैतन्यं सर्वथा भवत्येव। तत्र ब्रह्मचैतन्यमखण्डा स्थैतिकी ऊर्जा (Static Energy) जीवचैतन्यं गतिजोर्जा (Dynamic Energy) जगच्चैतन्यञ्च पदार्थगतोर्जा (Material Energy) एवेति वक्तुं शक्यते। त्रिधाऽप्यूर्जा तत्त्वत एकाऽपि व्यवहारे परस्परमुपकारिका रूपान्तरणधर्मिणी च भवन्ति। पदार्थपरिणामे सत्यपि तन्निहिता उर्जाऽक्षरत्वेन वर्तते। अयमेव ब्रह्माक्षरत्वस्य ब्रह्माद्वैतस्य चाभिप्रायः।

वर्तमान इलेक्ट्रानभौतिकीक्षेत्रे इयमवधारणा इलेक्ट्रानकणसंरचना–प्रसङ्गेन स्पष्टीभवति। तदनुसारेण मूलकणस्य बाह्यकक्ष्यायामवस्थितानामिलेक्ट्रानकणानामंशद्वयं भवति। आवेशितकणः (Charged Particles) तरङ्गप्रवाहश्च (Wave)। आवेशितकणः मूलतः निष्क्रियांशो भवति तरङ्गप्रवाहश्च सकलब्रह्माण्डे व्याप्तो भवति। एवमेक एव कण एकस्मिन्नेव काले जडचेतनात्मकः गत्यगत्यात्मकः सच्चिदंशात्मकश्च भवति। ऋणावेशत्वात्सः कणोऽपरेषां सजातीयकणानां सङ्घटनेन पदार्थरचनायाः कारणं भवति। तरङ्गरूपत्वाच्च तरङ्गग्राहकोपकरणैः तन्त्रैर्वैकस्मिन्नेव काले विविधस्थानेषु रूपग्रहणस्य ध्वनिग्रहणस्य च कारणं भवति। दृश्यश्रव्यप्रविधिरन्तरिक्षस्थानां संरचनानां घटनानाञ्च ग्रहणेन सम्पूर्णे विश्वस्मिंश्च तत्प्रसारणेन सर्वब्रह्ममयत्वमनानात्वमेव च

प्रतिपादयति। एवं भौतिकसङ्घटनदृशा "सर्व खल्विदं ब्रह्म" इति सिद्धमेव परिकल्पनामात्रम्।

## वैश्वीकरणस्य पराकाष्ठा

सर्वस्यापि जडचेतनात्मकस्य विश्वस्याखण्डाद्वयप्रतीतिः तात्त्विकस्तरे 'तत्त्वमसि' 'अहं ब्रह्मास्मि' चेति महावाक्यार्थयोः तादात्म्यं जनयति। यदा युष्मत्प्रतीतिः तत्पदे, अस्मत्प्रतीतिश्च ब्रह्मपदे सर्वस्मिन् ब्रह्माण्डमात्रे पर्यवस्यते तदैव ब्रह्माद्वैतस्य याथार्थ्यं सिद्ध्यति। लोकव्यवहारस्य सन्दर्भे ब्रह्माद्वैतस्योक्तावधारणा मानवतावादस्य चरमोत्कर्ष इति वक्तुं शक्यते।

सर्वासामपि मानवसंस्कृतीनां मूलमभ्युदयनिःश्रेयसयोः प्राप्तिः। तत्कृते च वैयक्तिकसामाजिकजीवनस्तरस्य नैतिकमूल्यनिष्ठोन्नयनेन सार्वभौमविश्वसंस्कृतेः प्रतिष्ठा कार्या। आत्मकल्याणादारभ्य विश्वमाङ्गल्यस्य भावना एव मानवीयमूल्यानां तन्निष्ठस्याचरणस्य च स्वरूपं निर्धारयति। 'अहं ब्रह्मास्मि' इत्यस्य महावाक्यस्य तत्त्वार्थमभिजानन् पुरुषः 'सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि' पश्यन् सर्वभूतहिते रतः भवितुमर्हति। 'आत्मवत् सर्वभूतेषु यः पश्यति स पश्यति इति मन्त्रयन् प्राणिमात्रं प्रति सौहार्दमयं व्यवहारं कर्तुं प्रवर्तते। 'वसुधैव कुटुम्बकम्' इति भावनायाः विकासः सर्वसमभावे दृश्यते।

नीत्याचारसम्प्रदायवर्गभेदादिसमस्याः निराकर्तुं 'तत्त्वमसि' इति महावाक्यस्य तत्त्वार्थज्ञानमावश्यकम्। सर्वात्मवादस्य प्रतिष्ठया रागद्वेषयोः मूले निहिता स्वार्थ–भावना विनष्टा भवति। एवं मानवः यदाचरणं स्वात्मने प्रतिकूलवेदनीयं मन्यते, तथा परान् प्रत्यपि न करोति।

तत्त्वत एकत्वे सत्यपि व्यक्तेरस्तित्वं सृष्टिव्यवहारदृशा स्वीक्रियत एव। लोकयात्रार्थम् पूर्णजीवनस्य प्राप्तिः मानवमात्रस्यैहिकलक्ष्यं भवति, तच्च सदसद्विवेकपूर्वकं धर्मनिष्ठार्थकामाभ्यां सदाचरणशीलतया सम्भाव्यते। यतोह्याचार एव धर्मार्थकामानां समसन्तोलनेन त्रिवर्गसाधनस्य हेतुः। परमपुरुषार्थत्वेन विविच्यमानः मोक्षोऽपि प्रतिकूलवेदनीयत्वान्निवृत्तिरेव। लोकव्यवहारस्य स्तरे ' सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः' इत्येषा विचारणा एव दुःखनिवृत्तेः तात्पर्यम्। एवं प्राणिमात्रं प्रति तादात्म्यभाव एकत्वेऽनेकत्वमनेकत्वे चैकत्वमनुभावयति। समष्टिप्रतीतेरयमुत्कर्षो मानवाय तज्जीवनदृष्टिं प्रयच्छति येनात्मनः 'प्रतिकूलानि परेषां न समाचेरत्' इति भावो दृढीभवति। वर्तमानकाले प्रचलितानां वैषम्याणां साम्प्रदायिकविवादानाञ्च निरासाय

ब्रह्माद्वैतसिद्धान्तस्य व्यावहारिकतात्पर्यमिदमेवाङ्गीकर्तव्यम्।

## पर्यावरणं प्रति तादात्म्यम्

पर्यावरणं लोकानां जीवनधारणायापरिहार्यावश्यकता भवति, येन जीवनानुकूलाः परिस्थितयो जायन्ते। इदानीं स्वार्थरतो मानवः प्रकृतिं प्रति अनुदारः तत्संदोहने च निष्करुणः सञ्जातः। निरन्तरं वर्धमानायाः जनसङ्ख्याया जैविकावश्यकतापूर्तये प्राकृतिकपदार्थनां यथोपयोगः क्रियते तेन संसाधनानामुत्तरोत्तरं क्षरणं भवति। तस्य प्रतिपूर्तिं बिनाऽचिरादेव पर्याप्तप्राकृतिकवस्तूनि दुर्लभानि भवितारः। महच्चिन्ताविषयोऽयम्।

ब्रह्माद्वैतस्यास्मिन् सन्दर्भेऽपि परमोपयोगित्वं वर्तते। सर्वत्रैव जडचेतने ब्रह्मभावं प्रतिष्ठाप्यात्मानुभूतिः औदार्यस्य पराकाष्ठा अस्ति। लोके प्रायः जडपदार्थेष्वपि यदात्मीयत्वं तादात्म्यञ्चानुभूयते तस्यैतदेव कारणम् 'एको भूतः सर्वभूतान्तरात्मा' इति तत्त्वतः सिध्यते। चेतनायाः स्तरे जडेष्वपि चैतन्यप्रतीतिः पर्यावरणं प्रति नूनं दायित्वबोधं जनयति मानवेषु। वर्तमानसमाजः 'ईशावास्यमिदं सर्वं तेन त्यक्तेन भुञ्जीथाः' इतीशावास्योपनिषदः वचनस्य तात्पर्यं विज्ञाय पर्यावरणसंरक्षणस्य सूत्रं ज्ञातुं शक्नोति।

निष्कर्षतः वक्तुं शक्यते यद् वर्तमानसमये न केवलं भारतवर्षेऽपितु सम्पूर्णे विश्वे हिंसा कदाचारभ्रष्टाचारातङ्कवादपृथक्त्वादीनां दुर्णीतीनां यस्ताण्डवः प्रचलितः वर्तते, तेन सनातनमानवमूल्यानि स्खलितानीव दृश्यन्ते, जडचेतनमात्रं प्रति सहृदयता सौहार्दसङ्घटनादिभावनानामभावो नितरामभिवर्धते। भौतिकोन्नतेर्दम्भेनादृष्टलक्ष्यो मानवोऽनित्यं नित्यवदाचरन् आस्ते। मोहाकुलः सन् पुरुषार्थस्य गूढार्थं विस्मरन् बाहुबलं भौतिकसाधनसम्पदं च पुरुषार्थस्य फलं मन्यमानः स्वेच्छाचारित्व–मधिगच्छन्नस्त्यद्यतनीयो मानवः। समस्तानामपि सङ्घर्षाणां दुःखानां चैतदेव मूलकारणम्।

दुःखनिवृत्तिर्लोकस्तरे तदैव भवितुर्महति यदा सर्वत्र तादात्म्यमनुभूयते। अद्वैतवेदान्तस्य व्यावहारिकतात्पर्यावगमो लोकोपकारायालम्। दर्शनं वस्तुतो जीवनदृष्टिः जीवनपद्धतिनिदर्शकं च भवत्यतस्तस्य सर्वथा लोकजीवनेन तादात्म्यं भवत्येव। ब्रह्माद्वैतसिद्धान्त एकतः सर्वस्यापि ब्रह्माण्डस्य ज्ञानगम्यत्वं प्रकाश्याविच्छिन्नजिज्ञासायाः मार्गं च प्रशस्य मानवजीवनं निरन्तरं श्रेयोऽनुसन्धानाय प्रेरयति, अपरतश्चाचरणस्तरे कमपि विश्वस्तरीयसाम्यवादं शंसते यस्याधारः 'शुनि चैव श्वपाके च पण्डिताः समदर्शिनः'

इत्यस्ति। साम्यदर्शनस्येयं विचारधारा विश्वस्य सर्वान् राजनीतिक–साम्यवादिमताननतिरञ्जयति। तात्कालिकलाभमेव लक्ष्यीकृत्य पुरुषार्थस्यैकाङ्गितया साधनेन लोकाः न यथेष्टं लक्ष्यं प्राप्नुवन्ति न च बहु अर्जयित्वाऽपि तुष्यन्ति। अतोऽद्वैतवेदान्तस्य भौतिकसामाजिकसांस्कृतिकव्यावहारिकतात्पर्यमवधार्य तदनुसारमाचरणेनैहिकजीवनस्य सर्वाङ्गं लाभमवाप्य साफल्यं प्राप्तुमर्हति। अथ च जन्मजन्मान्तरेष्वप्यनित्यपदार्थेष्वनासक्तः सन् न शोकं प्राप्नोति। 'तरति शौकमात्मविद्' इति श्रुतिवचनमत्र प्रमाणम्। समासेन वक्तुं शक्यते यदद्वैतवेदान्तो न केवलं शास्त्रार्थविषयोऽपितु व्यवहारविषयः। सम्पूर्णं विश्वमेकसूत्रे निबद्धीकर्तुं सिद्धान्तोऽयं परमोपादेयः सर्वदा सर्वथा प्रासङ्गिकः वैश्वीकरणस्य च यथार्थनिर्णायकः।



# मूलतत्त्वचर्चा

पदार्थसृष्टिविषयेऽप्रतिहता जिज्ञासा नित्यमनुसन्धानशीलां मानवमेधां चिरकालादेव जगत्प्रपञ्चस्य प्रत्यक्षीकरणे निरीक्षणे विश्लेषणे च सप्रयत्नां कुर्वन्ती आस्ते। विश्वस्य सर्वे वैज्ञानिकाः दार्शनिकाः विचारकाश्च जगतः स्थूलं वैचित्र्यमयं स्वरूपं मात्रमाकस्मिकं न मन्यन्तेऽपितु तत्र स्यात् किञ्चित्सूक्ष्मं तत्त्वम्। कस्माद्– मूल कारणादेतत्सर्वं व्यक्तं भवति कुत्र च लीयते? केन विनिर्मितं जगदिदं, किं वोपादानं कानि चोपकरणानीत्दयादिषु प्रश्नेष्वादितो विचारः क्रियमाणोऽस्ति। वस्तुतो मानवीयजिज्ञासाया क्षेत्रविस्तारस्य मर्यादाऽनन्तब्रह्माण्डसमन्वितायाः सृष्टेः परम– चरमबिन्दु यावद्विद्यते यत्र कल्पनाऽपि न गन्तुमर्हति। अनादिवाङ्मय– स्वरूपेऽपौरुषेये वेदे कोऽद्धा वेद क इह प्रवोचत कुत आजाता कुत इयं विसृष्टिः, इत्यादि वचनेन मन्त्रद्रष्टारो ऋषयः तज्जिज्ञासामुखेन ज्ञानावाप्तेः मार्गं प्रशस्तवन्तः। कदाचित्सृष्टेः प्रथमतत्त्वरूपेण तमः सद् असत् कं हिरण्यगर्भः आप इत्यादीनि तत्त्वानि परामृष्टानि। व्यक्तपदार्थस्य सूक्ष्मतमं तत्त्वमपि यतोऽभिव्यक्तं तदव्यक्तं परमकारणभूतं तत्त्वं किमिति चिन्तयन्तो मनीषिणः ब्रह्म प्रकृतिः परमाणुः पुद्गल इत्यादिभिः नामभिः विश्लेषणस्य प्रयासं कृतवन्तः किन्तु तत्रापि किमपि निश्चितं पर्यवस्थानं न दृष्टमतएवोपनिषदः नेति नेत्युपदिशन्त्यस्तस्य मूलतत्त्वस्यापरिमेयत्वमवाच्यत्वञ्च व्यक्तवत्यः।

अस्तु नानारूपात्मकं वैचित्र्यपूर्णं जगदेतद् गुणकर्मादिविभेदतो यादृक्चित्ररूपत्वं बिभर्ति तदनुभूयत एव। तस्य जगत उत्पत्तिरेकतत्त्वादजायत नैकेभ्यस्तत्त्वेभ्यो वा? कस्मात्क्रमाद्वा सृष्टिरभूदित्यादिप्रश्नानां समाधानाय स्वस्वाध्ययनपद्धत्या संलग्नाः दार्शनिकाः विज्ञानिनश्च परस्परमविरोधिन इति वक्तव्यं, यतोहि दर्शनं विज्ञानस्याधारः विज्ञानञ्च दर्शनस्य निष्कर्षः। अथवाऽपरमुखेन वक्तुं शक्यते यद्विज्ञानं प्रत्यक्षमात्रप्रमाणाश्रितं ज्ञानसाधनं वर्तते दर्शनं च प्रत्यक्षाश्रितैरनुमानादिभिः प्रमाणैरपि पदार्थसिद्धिं करोति। अथ च विज्ञानं सृष्टेः मूलतत्त्वरूपेण कमपि चेतनतत्त्वं न स्वीकरोत्यपितु परमाणूनां विशिष्टं संयोगमेव पदार्थसृष्टेः चेतनजीवसृष्टेश्च कारणमिति मन्यते। एतद्विपरीतं भारतीयदार्शनिकचिन्तने नैकधा विश्लेषणेऽपि तथ्येऽस्मिन् प्रायः सम्प्रदायानामैकमत्यं वर्तते यज्जडपदार्थजगतः कारणभूतं किमपि चेतनतत्त्वमवश्यमेव भवेत्। पुरुष ईश्वरः परमेश्वरः शिवो ब्रह्म वा भवितुमर्हति तत्तत्त्वम्। अत्रापि ब्रह्म चैतन्यमात्रं तत्त्वं पुरुषादयश्च चैतन्यवन्तः चेतनाः। चैतन्यं वस्तुतः निरवयवं निरतिशयं

तत्त्वं परमेश्वरादयश्च सातिशया भवन्तीति सामान्यगतिः। नास्तिक भारतीय–दार्शनिकसम्प्रदायेषु लोकायताः चार्वाकाः परमाणूनामाकस्मिकं संयोगं चैतन्ये हेतुं मन्यन्ते। आधुनिकविज्ञाने सन्दर्भेऽस्मिन् चार्वाकसिद्धान्तस्य विकसितं स्वरूपं दृश्यते। आधुनिकविज्ञाने पदार्थे स्वभावसिद्धा ऊर्जा क्रियासु गतिषु वा हेतुर्मन्यते। पदार्थ संरचना परमाणुसंयोगश्च तयोर्जया सम्भवति। अग्रेऽस्य चर्चा करिष्यते।

येषु दर्शनेषु सन्मात्रमव्यक्तं वा तत्त्वं मूलकारणं स्वीक्रियते तत्रापि तत्तत्त्वाज्जातेभ्यो मूलतत्त्वेभ्यः पदार्थसृष्टिर्मता। यथा ब्रह्मणो मायाशक्तेरावरण–विक्षेपशक्तिभ्यां व्यक्तान्याकाशादीनि महाभूतानि, त्रिगुणात्मिकायाः प्रकृतेः महदादितत्त्वानि वा जायन्ते तानि च तत्त्वानि व्यक्ताव्यक्तदशायां परमाणुरूपाणि भवन्ति ततः परमाणुसंयोगो यदा जायते तदा व्यक्ततराणि तत्त्वानि परस्परमनुप्रवेशेन यौगिकभूतानि भवन्ति। आधुनिकविज्ञानं मूलतत्त्वानामनुसन्धानं विश्लेषणं च यौगिकस्तर एव करोति।

एवं मूलतत्त्वविषयिन्यां चर्चायां यानि तथ्यान्यवधेयानि, तत्र प्रमुखान्यधो–निर्दिष्टानि भवितुमर्हन्ति–

१. मूलतोऽव्यक्तरूपेणैकमेव तत्त्वं स्यात्– 'एकं सद्विप्राबहुधा वदन्ति' इति।
२. दृश्यपदार्थजगत उत्पत्तिपर्यन्तं मूलतत्त्वस्य नैकानि विकासात्मकानि स्तराणि स्युः।
३. मूलतत्त्वस्य विकासस्य धाराद्वयं स्याच्चेतनं जडं च।
४. मूलतत्त्वस्य विकासक्रमे चिन्तनसरणीनां विरोधो न मन्तव्योऽपितु तत्र कश्चित्समन्वय एव प्रतिपद्यते।
५. प्राच्यदर्शनमाधुनिकविज्ञानञ्चैकस्यैव गन्तव्यस्य यात्रिणौ।
६. नित्यत्वादविनाशि मूलं तत्त्वमेवैकमात्रं ज्ञेयम्।

उक्तसन्दर्भे सर्वप्रथमं चिन्त्यं यत्किं नाम मूलतत्त्वं कश्चास्याभिप्रायः?

## मूलतत्त्वम्

मूलं च तत्तत्त्वमिति, पदद्वयसमसनान्निष्पन्ने पदेऽस्मिन् मूल प्रतिष्ठायां (अदादिगणे) मूल रोहणे (चुरादिगणे) धातोर्वा क प्रत्यय योगाद्व्युत्पन्नस्य मूल इति शब्दस्यार्थः प्रतिष्ठापनमाधार आरम्भः प्रथमं भवो वेति वक्तुं शक्यते। विकासः जडचेतनात्मकजगतः स्वभावः विकासस्य च परिवर्तनशीलत्वं सिद्धमतः विकासस्यारम्भिकबिन्दु किमिति ज्ञानेन तस्यान्तिमचरणस्यानुमानं कर्तुं शक्यते। छान्दोग्योपनिषद् वाचारम्भणं विकारो नामधेयमित्युपदिश्य मूलमेव सत्यमिति स्वीकरोति। मूलज्ञानेनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातं भवति। आरुणिः श्वेतकेतुं

ब्रह्मविज्ञानमुपदिशन् विविधैः दृष्टान्तैः मूलस्य प्रतिष्ठां प्रतिपादयन् मूलान्वीक्षणाय प्रेरयति। सर्वेषामपि पदार्थानां जीवानां भावानां मूलं सन्मात्रमित्युपदिश्योद्घोषरूपेण सम्पुटीकरोत्यधोनिर्दिष्टं वाक्यम्—

**सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः।**

दृष्टव्यमत्र यत्सतः विकारा एव वाग्व्यवहारविषयाः पदार्थाः। सर्वेषां मूलं सदविकार्यरूपमव्ययं चोक्तम्। सदेव पञ्चतन्मात्ररूपेण महाभूतरूपेण जीवरूपेण व्याघ्रसिंहवृकवराहकीटपतङ्गादिप्राणितया सरित्सागरवृक्षादिरूपेणाभिव्यक्तिं प्राप्य तत्तद्रूपेषु व्यवह्रियते। अत्रोल्लेखनीयं यदुपर्युद्धृते 'एकं सद्विप्राबहुधा वदन्ति' इत्यस्मिन् वाक्ये बहुधा वाच्यत्वं तत्त्वमुत वैकं सत्। वस्तुतः सर्वमपि चिन्तनं सर्वे विचाराः तद्विषयाश्च व्यवहाराश्रिताः भवन्ति। अतः सत्यपि निरपेक्षसन्मात्रे तत्त्वे मूले व्यवहारापेक्षया विविधमतवादिभिः यथा दृष्टं यथानुभूतं वा तत्त्वलक्षणं तद्विभागश्च कृतः।

अस्तु। विश्वप्रपञ्चस्य कारणभूतान्युपादानानि तत्त्वानीति कृत्वा साङ्ख्ये पञ्चविंशतिः योगे षड्विंशतिः वेदान्ते च त्रयं मौलिकतत्त्वानां मतम्। न्यायवैशेषिकदर्शने ज्ञेयत्वाभिधेयत्वापेक्षया पदार्थविभागं कृत्वा क्रमशः षोडश सप्त च सङ्ख्याकाः पदार्थाः स्वीकृताः। आधुनिकविज्ञानं नवाधिकशतं मूलतत्त्वानि (यौगिकानि) स्वीकरोति। किन्त्वेतेषामप्येकमुपादानभूतं तत्त्वं ब्रह्म प्रकृतिः परमाणुः पुद्गलश्चेति नामभिः प्रायः ख्याप्यते। स्मरणीयमस्ति यद्वेदान्तमते ब्रह्म साङ्ख्यमते प्रकृतिः न्यायवैशेषिकमते आधुनिकविज्ञानमते च परमाणुः जैनमते च पुद्गल इत्येकं मूलतत्त्वमिति साध्यते। क्रमश एतेषां स्वरूपचर्चाऽत्र क्रियते।

**ब्रह्म**

ब्रह्म इत्येतादृक्प्रत्ययोऽस्ति यस्य व्याख्या निर्गुणनिरवयवनिराकार–शुद्धबुद्धमुक्तप्रज्ञानचैतन्यतया क्रियते। बृह बृंहणे धातोः व्युत्पन्नस्य ब्रह्मशब्दस्य वाच्यार्थः बृंहणशील इत्यस्ति। अतः ब्रह्म 'अणोरणीयान् महतो महीयान् इत्युक्तः। वस्तुतः अणोरणीयान् परमाणुः महतो महीयान् चाप्रतीयमाना कल्पिता महत्तमसत्ता, तयोः मध्यस्थः समग्रविस्तारोऽखण्डतया येन चैतन्येन व्याप्यते तदेव ब्रह्मपदवाच्यम्। परमाणुश्चेत् पारिभाषिकरूपेण स्वीक्रियते तर्ह्युत्तरोत्तरं तस्य विखण्डनं कुर्वाणाः वैज्ञानिकाः नवनवानि तत्त्वान्यन्वीक्षन्तः सन्ति। तात्त्विकरूपेण परमाणोः स्वरूपमिदानीमप्यज्ञात–मेवातस्तदव्यक्तमित्येव वक्तुं शक्यते। अनन्तज्ञानस्य चरमबिन्द्वप्यज्ञातमेवात एवैकतो नेति नेतीति वचनेनोपनिषदः ब्रह्मणः निरतिशयत्वं प्रतिपादयन्त्यपरतश्च सर्वं खल्विदं ब्रह्मेति वचनेन सर्वेषु पदार्थेषु विश्वस्मिन् वाऽणुमात्रे वा तस्य चैतन्यस्य व्याप्तिं स्वीकुर्वन्ति।

तत्त्वरूपेण तदेवैकं नित्यं जन्मस्थितिलयकारणं तत्त्वं विद्यते। यथा तैत्तिरीयोपनिषद्युक्तम्–

**यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञास्व। तद्ब्रह्मेति।**

तैत्तिरीयोपनिषद् ३/१/१

ब्रह्मसूत्रे बादरायणो वेदव्यासोऽथातो ब्रह्मजिज्ञासेति प्रथमे सूत्रे जिज्ञास्यं ब्रह्म द्वितीये सूत्रे जन्माद्यस्य यत इत्युक्त्वा ब्रह्मण एवास्य जगतः जन्मस्थितिलयं स्वीकरोति। मुण्डकोपनिषद् ब्रह्मणः विश्वव्याप्यत्वं प्रतिपाद्य सर्वं विश्वं ब्रह्मणो विस्तार एवेति स्वीकरोति–

**ब्रह्मैवेदममृतं पुरस्ताद्**
**ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण।**
**अधश्चोर्ध्वञ्च प्रसृतं ब्रह्मैवेदं**
**विश्वमिदं वरिष्ठम् ।।**

मुण्डकोपनिषद् २/२/११

बृहदारण्यकोपनिषदि, ब्रह्म वा इदमग्र आसीत्' इति वचनेन मूलतत्त्वरूपेण ब्रह्मैव मतम्। तैत्तिरीयोपनिषदि तस्य ब्रह्मणः ईक्षावशाद् बहुरूपतयाऽभिव्यक्तिः **स्वीक्रियते।**

**सोऽकामयत्। बहु स्याम प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा इदं सर्वमसृजत् यदिदं किं च। तत्सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवत् निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं चाविज्ञानं च। सत्यं चानृतं च सत्यमभवत्।**

तैत्तिरीयोपनिषद् ब्रह्मानन्दवल्ली– षष्ठोऽनुवाकः

सप्तमेऽनुवाके पुन उच्यते–

**असद्वा इदमग्र आसीत्। ततो वै सदजायत।**

असदित्यस्य तात्पर्यमव्यक्तमित्येव मन्तव्यम्। स्वभावतो निष्क्रियं निर्विकल्पं निर्विशेषं निरुपधि ब्रह्म सृष्ट्यपेक्षया मायोपहितं भवति। माया च त्रिगुणात्मिका प्रकृतिर्यस्या आवरणविक्षेपशक्ती जगत्प्रपञ्चस्य विस्तारे कारणं भवतः। मायेयं साङ्ख्यसम्मतात्प्रकृतितत्त्वादभिन्ना प्रतीयते, एतस्य विषयस्य चर्चा प्रकृतिप्रसङ्गे करिष्यते। अत्रोल्लेखनीयमस्ति यद्ब्रह्मणो मायाख्या शक्तिः सदसद्विलक्षणा–ऽतोऽनिर्वचनीयेत्युक्ता। आवरणशक्तिः ब्रह्मणस्तात्त्विकं स्वरूपमाच्छादयति विक्षेपशक्तेस्तमोप्रधानादंशादाकाशादिभूतान्यपञ्चीकृतानि जायन्ते। तान्येव तन्मात्राणीत्युच्यन्ते। तेभ्यः पञ्चीकृतानि स्थूलभूतानि जायन्ते। ततो

नानापदार्थसृष्टिर्भवति। तत्त्वतो ब्रह्मजीवजगत्सु तादात्म्यं स्वीक्रियते। भेदप्रतीतिः व्यावहारिकी आभासरूपा वा भवति।

इदानीं प्रश्नः समुत्पद्यते यन्माया तज्जन्यः प्रपञ्चश्च कथं सदसद्विलक्षणे भवतः? ब्रह्माद्वैतवादिनः त्रिविधं सत् स्वीकुर्वन्ति—पारमार्थिकं व्यावहारिकं प्रातिभासिकं च। तत्र पारमार्थिकं सदेव वस्तुसद् भवति, तदेवाक्षरं ब्रह्म परब्रह्म वेत्युच्यते। अन्यद्व्यावहारिकं प्रातिभासिकं च सदनित्यं भवत्यतस्तन्मायावदेवानिर्वचनीयं भवति। परमार्थसदेव मूलतत्त्वं भवति।

## प्रकृतिः

साङ्ख्यदर्शने व्यक्ताव्यक्तज्ञतत्त्वेष्वव्यक्ततत्त्वं प्रकृतिपदवाच्यमुक्तम्। सैव मूला प्रकृतिरुपादानकारणं सृष्टेः। त्रिगुणात्मिकायाः प्रकृतेः विक्षोभाद् महद् महतोऽहङ्कारोऽहङ्कारान्मनः पञ्चकर्मेन्द्रियपञ्चज्ञानेन्द्रियपञ्चतन्मात्राणि तन्मात्रेभ्यश्च महाभूतानि जायन्ते। उत्पत्तिविनाशयोस्तात्पर्यमभिव्यक्तिस्तिरोभावश्चेति ज्ञेयम्। त्रिगुणानां साम्यावस्था प्रकृतिः। अतः प्रकृतेः स्वरूपं त्रिगुणात्मकम्। साङ्ख्योक्ताः गुणाः त्रिगुणात्मकत्वाद्द्रव्याण्येव। साम्यावस्थायां सत्त्वरजस्तमांसि सुप्तानि निष्क्रियाणि च भवन्ति। पङ्ग्वन्धवद् यदा त्रिगुणातीतः पुरुषः प्रकृत्या संयोगं प्राप्नोति तदा त्रिगुणविक्षोभो जायते। यस्य गुणस्य तदा प्राधान्यं भवति तद्गुणात्मिका सृष्टिर्भवति।

प्रकृतेः तज्जन्यस्य जगतः स्वरूपावबोधाय च त्रिगुणानां स्वरूपज्ञानमावश्यकम्। साङ्ख्यकारिकायां त्रिगुणानां स्वभाव एवमुक्तः –

**सत्त्वं लघुप्रकाशकञ्चलं रजः गुरुवरणकमेव तमः।**

सत्त्वगुणः लघुः पदार्थानां प्रकाशक ऊर्ध्वगतिश्च भवति। रज उत्तेजकं चलञ्च भवति, तमश्च गुरु पदार्थानामावरकं च भवति। पदार्थानामभिव्यक्तिकाले साम्यावस्थायां प्रकृतिविक्षोभो हेतुर्भवति विक्षोभश्च रजसश्चलत्वाद् भवति। सत्त्वगुणप्राधान्यात्सत्ताया भावो भवति, तमःप्रभावाच्च सत्तावतः पदार्थस्य तिरोभावो भवति। त्रयोऽपि गुणाः परस्परं विरोधिस्वभाववन्तोऽपि त्रिदण्डवदन्योऽन्याश्रितास्तिष्ठन्ति। अविवेकि-स्वभावात्सर्वथा पृथक्त्वं तेषां न सम्भाव्यते। अन्योऽन्यानभिभूतास्ते निष्क्रियाः सुप्ताः भवन्ति। अभिभवाच्चोत्पन्नक्रियास्त एव नानापरिणामभेदैः परिणमन्ते। एते त्रिगुणाः भावात्मका अदृश्या अतीन्द्रियाश्च भवन्ति। तत्तत्कार्यैरनुमीयन्ते। गुणानुसारेणैव पदार्थानां व्यक्तितत्त्वनिर्णयः क्रियत इति वस्तुस्थितिः दृश्यते लोके।

एवं त्रिगुणात्मिका प्रकृतिः परिणामिनी भवति। एष प्रकृतिपरिणामः मायापरिणामवदेव भवति किन्तु माया परतन्त्रा ब्रह्मणः शक्तिरुक्ता प्रकृतिश्च प्रधानमिति प्रोक्तम्। सत्त्वं कार्यक्षमचेतनापरामभिव्यक्तिं प्रवर्तयत् प्राणिषु सुखानुभूतेः कारणं

भवति। रजः सर्वासामपि क्रियाणां गतीनाञ्चादिस्रोतः प्राणिषु दुःखजनकं तमश्च क्रियावरोधकमौदासीन्यनिरुत्साहयोर्जनकं भवति। एते गुणाः सौक्ष्म्यगतिस्थौल्यानां द्योतकाः। एवं सत्त्वं विध्यात्मकं (सत्) तमः निषेधात्मकम् (असत्) रजश्चोभयोः मध्ये सङ्घर्षस्य द्योतकं भवति। स्वभावत एतानि भौतिकान्यसन्त्यपि सकलभौतिकपदार्थेषु स्वरूपतो व्याप्तानीत्येतेषां वैशिष्ट्यम्। यथोक्तं विष्णुपुराणे–

**शब्दस्पर्शविहीनं तद्रूपादिभिरसंयुतम्।**
**त्रिगुणं तज्जगद्योनिरनादिप्रभवोऽप्ययम्।।**

वि.पु.१/२।२०–१

**परमाणुः**

परमश्चासावणुश्चेति निर्वचनेन परमाणुः पदार्थस्य सूक्ष्मतमोऽणुरिति मतम्। न्यायसूत्रकारः 'परं वा त्रुटेः' इति सूत्रेण तमेव परमाणुतया परिभाषते यस्य पुनः त्रुटिः न सम्भाव्यते। ब्रह्मसृष्टिवादिनः प्रकृतिपरिणामवादिनश्च परमाणुविषये मौनाः सन्ति। वस्तुतः तयोः विवेचनविषयो मूलतत्त्वभूतस्य ब्रह्मणः स्वभावस्य प्रकृतेश्च स्वरूपस्य व्याख्या इति वक्तुं शक्यते। किन्तु परमाणुः दृश्यजगतः पदार्थसरंचनाक्रमस्य तदनुसारञ्च विश्ववैचित्र्यस्य हेतुः। स्मरणीयं यद्ब्रह्मजीवजगतां व्याख्या त्रिविधसत्तारूपेण क्रियते। प्रकृतिस्तस्याः सत्ताया स्वरूपाधायकान्यङ्गानि महदादीनि प्रतिपादयति परमाणुश्च सर्वेषामपि व्यक्ताव्यक्तानां मूर्तामूर्तानां नित्यानित्यानां वा पदार्थानां रूपाधायकं मूलतत्त्वमिति ज्ञेयम्। परमाणुरयं निरवयवो निर्गुणोऽतीन्द्रियो निर्भारः निष्क्रियश्च भवति। पदार्थसृष्टिक्रमे परमाणुद्वयसंयोगाद्द्वयणुकः द्वयणुकत्रयसंयोगादेकः त्रसरेणुः चतुर्णां त्रसरेणूनां संयोगादेकश्चतस्रेणुः पञ्च चतस्रेणुसंयोगाच्चैकः पञ्चाणुको जायते। द्वयणुकपर्यन्तं पदार्थस्य परमाणुपरिमाणो भवति। त्र्यणुकः महत्परिमाणवान् भवति। परमाणुपरिमांणदशायां पदार्थो निर्गुणो भवति महत्परिमाणदशायाम् सगुणो जायत इति परमाणुवादिनः। अत्र प्रश्नः समुपतिष्ठति यन्निर्गुणात्कथं गुणो जायते महत्परिमाणश्च कथं जायते इति। नैयायिकाः तत्र परमाणूनां सङ्ख्यां कारणं मन्यन्ते।

आधुनिकपरमाणुसिद्धान्तस्य साधर्म्यं वैधर्म्यं च प्राच्यपरमाणुसिद्धान्तेन क्रियते चेत्तर्हि ज्ञायते यदाधुनिका अपि परमाणुं निरवयवं निर्गुणं भारहीनं च स्वीकुर्वन्ति। परमाणवः पदार्थसंरचनायां मूलकणा भवन्ति। निरवयवत्वात्परमाणुरदृश्यो भवति। परमाणुसंयोगाज्जातोऽणुः सूक्ष्मत्वाददृश्यो भवति। मूलतः परमाणवः सजातीयाः विजातीया वा न भवन्त्यपितु तेषां संरचनाघटकेषु भेदः तेषां गुणधर्मान् पृथक् करोति। तदनुसारं विविधगुणधर्मपरिणामवतां मूलतत्त्वानामनुसन्धानं कृत्वा मेण्डलिक इत्याख्यो वैज्ञानिकः नवाधिकशतं मूलतत्त्वानां योगविभागेन काचिद्विशिष्टा आवर्तसारणी विनिर्मिता।

उल्लेखनीयमस्ति यद्भारतीयरसायनशास्त्रस्य जनकः कणादः द्रव्यादिसप्तपदार्थानां साधर्म्यवैधर्म्याभ्यामनन्तपदार्थवर्गाणां सृष्टिं स्वीकरोति।

अस्तु। साङ्ख्यसम्मतस्य गुणत्रयस्य न्यायसम्मतस्य परमाणोश्च परिप्रेक्ष्ये आधुनिकपाश्चात्यपरमाणुवादिभिः प्रोक्तं परमाणुस्वरूपमवेक्षणीयम्। तदनुसारं परमाणूनामाकस्मिकसङ्घातेनाणवो जायन्ते। परमाणुः वैशेषिकवदेवाधुनिकैरपि निरवयवोऽदृश्यो निर्गुणश्चेति स्वीक्रियते। किन्तु परमाणोः स्वरूपं घटकत्रयात्मकं भवति। ते च मूलघटकाः न्यूट्रानप्रोटान–इलेक्ट्रानकणाः भवन्ति। परमाणोः सरंचना केनचिद्वर्तुलवृत्तरूपेण कल्पिता यस्मिन् मध्ये केन्द्रकं (नाभिकं) भवति तत् परितः प्रोटानकणा इलेक्ट्रान कणाश्च विचक्रमन्ते। उल्लेखनीयमस्ति यद्वैदिकवाङ्मये कस्या अपि भौतिकसंरचनायाः वृत्ताकारस्थितौ मध्यस्थकेन्द्रस्यार्थे प्रायशो 'नाभिः' इति पदं प्रयुक्तं तदेव च सर्वतो आकर्षणस्य केन्द्रं भवति। न्यूट्रानादीनां गुणधर्मविषये भौतिकीविदः स्वीकुर्वन्ति यन्नाभिकस्यान्तःकक्ष्यायां स्थिताः न्यूट्रानकणा आवेशरहिताः उदासीना तटस्थाश्च भवन्ति। उदाहरणार्थमोषोजन (आक्सीजन) इत्याख्यतत्त्वस्य परमाणौ न्यूट्रानादयस्त्रयोऽप्यष्टाष्टसङ्ख्याकाः गन्धकस्य परमाणौ प्रतिघटकं षोडश क्लोरीन तत्त्वस्य परमाणौ सप्तदश प्रोटानकणाः सप्तदश इलेक्ट्रान कणा अष्टादश च न्यूट्रान कणाः भवन्ति।

पारमाणविकक्रियायां तेषां किमपि योगदानं न भवति। तथापि प्रोटानन्यूट्रानकणेषु विचक्रमणस्य केन्द्रत्वात् पारमाणविकस्थितौ तेषां महत्त्वपूर्णा भूमिका भवति। बहिः कक्ष्यायां प्रोटानकणाः धनात्मकावेशरूपेण इलेक्ट्रानकणाश्च ऋणात्मकावेशस्वरूपेण तिष्ठन्ति। धनावेशः गुरुः भवत्यतः ऋणावेशस्तं प्रत्याकर्षितो भवति। रदरफोर्डाख्यो भौतिकीविदेतदाकर्षणमेव रासायनिकक्रियासु कारणम् इति स्वीकरोति। परमाणोः इलेक्ट्रानकणोऽपरस्य परमाणोः कक्ष्यां प्रविशति तर्हि तयोरुभयोरपि परमाण्वोः स्वभावः परिवर्त्यते। यौगिकभूतानां परिणामानां सृष्टिरनयैव प्रक्रियया भवति। अथ न्यूट्रानप्रोटानानां सङ्ख्या परमाणुभारस्य निर्धारणं करोति। वस्तुतः प्रत्येकं परमाणौ प्राय इलेक्ट्रानप्रोटानयोः सङ्व्या क्रियायाः हेतुर्भवति। इलेक्ट्रानप्रोटानयोर्मध्ये यावत्कालमाकर्षणं न भवति तावत्कालं निष्क्रियः तिष्ठति परमाणुः। किन्तु यदा ऋणावेशत्वाल्लघुः इलेक्ट्रानकणः गुरुत्वाद्धनावेशं प्रत्याकृष्टं भवति तदाऽसन्तोलने सति क्रिया जायते। सा च क्रिया पारमाणविकविक्षोभं जनयति। आधुनिकैः वैज्ञानिकैः पाजिट्रान इत्याख्यस्य नवीनकणस्याप्यस्तित्त्वं स्वीकृतम्। परमाणुसंयोगे तस्य कणस्य पृष्ठभूमिमनुक्त्वाऽत्र दृष्टव्यं यन्न्यूट्रानादयः पूर्वोक्तकणाः समद्रव्यमानवन्तो भवन्ति किन्तु तत्र भारवैषम्यं भवति। यथा हि प्रोटानभारः इलेक्ट्रानभारतो १८३७ गुणोऽधिको भवति' येषां परमाणूनामिलेक्ट्रानसङ्ख्या समा भवति ते समस्थानिका उच्यन्ते। तेषु

संयोगस्य सम्भावना न्यूना भवति। येषां च परमाणूनामिलेक्ट्रान सङ्ख्या भिन्ना भवति, ते विषमस्थानिकाः भवन्ति। तेषु परमाणुषु क्रियाजन्यः संयोगो जायते। स च संयोगः दृश्यपदार्थस्य कारणं भवति।

उक्तमूलतत्त्वानामन्योऽन्यसम्बन्धं सापेक्षत्वं चावश्यमेव चिन्तनीयम्। किन्तु प्रसङ्गतः पाश्चात्यदार्शनिकानां मतस्यापि तृणस्पृशन्यायेनोपन्यासो विधेयः। पाश्चात्यदार्शनिकविकासक्रमे थेलीजमहोदय (६०० वर्ष पूर्व) एनाक्सामिनीज़ महोदयः हेराक्लीटसमहोदय इत्येतेषां यूनानदेशीनायां दार्शनिकानां चिन्तनसरणिं परिवर्धयन् एम्पीडाक्लीज़महाशयोऽग्निजलवायुपृथिवीति चतुर्भिः प्राथमिकैः तत्त्वैः भौतिकपदार्थानां सृष्टिं स्वीकृतवान्। स्मरणीयमस्ति यद्भारतीयैः पञ्चमहाभूतान्युक्तानि। आकाशस्तत्राश्रयोऽवकाशरूपः। तस्मिन्नन्यानि भूतानि व्याप्यन्ते तिष्ठन्ति च। एनाक्सागोरस महाशयः पुद्गलाख्यैः असङ्ख्यसूक्ष्मकणैः पदार्थसृष्टिं प्रतिपादितवान् भारतीयदार्शनिकसम्प्रदायेषु जैनदार्शनिका अपि पुद्गलं मूलतत्त्वं स्वीकृतवन्तः। तस्य पारिभाषिकं स्वरूपं 'पूरयन्ति गलन्ति च' इति प्रायः अणोः समकक्षमिति वक्तुं शक्यते। कालान्तरे ल्यूसिपसमहोदयः डेमोक्रेटिसमहोदयश्च परमाण्वाख्यैः सूक्ष्मकणैः पदार्थजातस्योत्पत्तिं मतवन्तौ। तन्मते परमाणवः गुणात्मकदृशा समाः भवति। एवं परमाणवः सप्रकृतिका अदृश्या अविभाज्याश्च भवन्ति।

उपर्युक्त विवेचनेन सर्वस्यास्य जगतः मूलतत्त्वं मूलकारणं वा किमिति विषये यथा चर्चा कृता तत्र ब्रह्म चेतनं चैतन्यमात्रं वा प्रकृतिरचेतना जडा वा परमाणुश्च चेतनाचेतन इति वक्तुं शक्यते। यथा 'अणोरणीयान्' 'एको देवः सर्वभूतेषु गूढः' 'सर्वभूतान्तरात्मा' '.....तत्त्वं निहितं गुहायाम्' इत्यादिवचनान्येकतः ब्रह्मणोऽणुत्वं प्रतिपादयन्ति, अपरतः तस्य व्यापकत्वमुपदिश्यते। निष्क्रियमपि तत् कारणं मतमचलप्रतिष्ठमपि चलं सर्वशक्तिमत्सर्वज्ञञ्चोक्तम्। आदिकालादद्यपर्यन्तं तस्य ब्रह्मणः स्वरूपं सर्वथाऽनिर्वचनीयमेव मतम्। ब्रह्मणः प्रतिष्ठा वस्तुतः दार्शनिकविश्लेषणस्य पद्धतिरिति वक्तुं शक्यते। समग्रमपि ब्रह्मविज्ञानं ब्रह्माण्डविज्ञानमेव यस्मिन् यत्किञ्चिदपि कल्पनाविषयो भवितुमर्हति तत्सर्वं समाविशते।

प्रकतिः तस्य ब्रह्मविज्ञानस्य तन्मूलबिन्दु स्वीकर्तुं शक्यते यस्मात्पूर्वं सर्वमप्यव्यक्तं भवति। प्रकृतेरव्यक्तत्वं तस्याः व्यक्तेः सिद्ध्यर्थमेव स्वीक्रियते। तत्त्वतः प्रकृतेः मध्यवर्तिनी सीमा व्यक्ताव्यक्तात्मिका इति वक्तुं शक्यते। महदादिव्यक्तसृष्टिदृशा साऽव्यक्ता त्रिगुणानां सद्भावदृशा च व्यक्तेति वक्तुं शक्यते। अथ महदादि तत्त्वाभिव्यक्तिदशायां यस्मान्मूलतत्त्वाद् महदादि महत्परिमाणादिर्वा पदार्थानां जायते तत्परमाणुरेव नापरः।

एवं तत्त्वतः ब्रह्म वा प्रकृतिर्वा परमाणुर्वैकस्यैव मूलतत्त्वस्य क्रमिक–स्तराणि स्वीकर्तुं शक्यन्ते। यथा पिण्डे तथा ब्रह्माण्डे इति न्यायेन परमाणुं ब्रह्माण्डस्य प्रतिरूपं

स्वीकृत्य चेद् व्याख्या क्रियते तर्हि तथ्यमेतत् स्पष्टं भविष्यति। बृहदारण्यकोपनिषदि उक्तं यत्–

**पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम्।**

बृहदारण्यकोपनिद् २/५/१

**ब्रह्मैवेदं सर्वम्।** तदेव २/४/६

ऋग्वेदे, 'रूपं रूपं प्रतिरूपो बभूव' इत्यादिमन्त्रेण (ऋग्वेदः ४/७/३३/१८) कठोपनिषदि 'रूपं रूपं प्रतिरूपं बहिश्च' इत्यादि वचनेन सर्वस्यैकरूपत्वं प्रतिपादितं वर्तते।

अस्तु। परमाणोः संरचनायाः विश्लेषणमुक्तसन्दर्भे करणीयमिति।

नाभिकं केन्द्रकं वा ब्रह्मक्षेत्रमूर्जाक्षेत्रं वा भवति तस्यान्तः कक्ष्यायामुदासीनाः न्यूट्रानकणाः तिष्ठन्ति। सत्त्वगुणाः भारेऽतिलघवोऽत ऊर्ध्वं गमनशीलाः प्रकाशने क्षमाः इलेक्ट्रानकणाः बाह्यकक्ष्यायु वर्तन्ते। स्वतन्त्रा अप्येते प्रोटानकणानामाकर्षणेन बद्धाः भवन्ति। प्रोटानकणाः धनावेशा इत्युच्यन्ते ,ते च गुरुत्वादवरोधकाः तमोवृत्तयो भवन्ति। विरोधिधर्मिणावुभौ शान्तावस्थायां (साम्यावस्थाया) यदा तिष्ठन्ति तदा परमाणुभाररहिताः भवन्ति। यदा नाभिके विक्षोभो जायते तदोदासीनाः नयूट्रानकणाः प्रवृत्तिवन्तो भवति। अतस्तेषां रजोगुणात्मकत्वं भवतीति वक्तुं शक्यते। नाभौ विघटने सति तस्मादूर्जा निःसरति, येन लघुत्वादूर्ध्व गमनशीला इलेक्ट्रानकणाः प्रतिवेशिपरमाणोः कक्ष्यासु स्थितान् प्रोटानकणान् प्रत्याकृष्टाः भवन्ति। सजातीयपरमाणुसंयोगेनाणुः जायते। अनयैव प्रक्रियया अणुसंयोगाद् दृश्यपदार्थाः जायन्ते। एवं यथा गुणानां भौतिकं स्वरूपं न भवति किन्तु सक्रियाः भूत्वा ते भौतिकपदार्थानाम् उत्पत्तिकारणतां गच्छन्ति तथैव परमाणावप्यन्तःक्षोभेन यदा घटकत्रयेऽभिभवो जायते तदा महत्परिमाणात्मकं दृश्यवस्तुजातमुद्भवति। परमाणव एतेऽनन्ता अनादिकालत आकाशे दिक्कालावच्छिन्नाः विचरन्ति। आकाशे व्याप्यत्वादेते स्वतन्त्रा अपि परतन्त्रा, अखण्डा अपि प्रयोजनवशात्खण्डत्वं यान्ति।

अत्रापरः प्रश्न उपस्थापयितुं शक्यते यत्परमाणुसंयोगे किं कारणं भवति? नैयायिकास्तत्रेश्वरेच्छां स्वभाववादिन आकस्मिकसंयोगं च कारणं मन्यन्ते। ब्रह्मतत्त्वविमर्शपराः तस्य परब्रह्मणः इच्छामात्रं क्रीडामात्रं वा तत्र हेतुं स्वीकुर्वन्ति। अत्र भेदः मात्रमास्थाविश्वासयोः व्याख्यापद्धतेर्वेति। न तत्र विवादोऽपेक्ष्यते। किन्तु सर्वेष्वपि चिन्तनेषु विश्लेषणेषु वा मूलतत्त्वविषये याऽवधारणा समायां दिशि प्रतिष्ठिता दृश्यते तस्य सूत्रवदुपस्थापनमेवात्र क्रियते।

१. मूलतत्वं तद्घटकं वर्तते यत् सृष्टिभिन्नदशायां निष्क्रियं निरवयवं सुप्तमतीन्द्रियं च भवति।

२. मूलतत्त्वं मूलत आवेशरहितं तटस्थमुदासीनं वा भवति।
३. स्वरूपदृशा मूलतत्त्वस्यांशद्वयं भवति–द्रव्यमूर्जा च।
४. कस्यापि पदार्थस्य व्यक्तिगतस्वरूपनिर्धारणे घटकत्रयम् उत्तरदायि भवति–रूपं गुणो धर्मश्च। रूपमाकारनिर्णायकं, गुणः क्रियानियामको, धर्मश्चोर्जाशक्तेः द्योतको भवति। अनया दृशा परमाणुः पदार्थस्य रूपनिर्माणे साधको भवति, प्रकृतिः गुणाधानाय कल्प्यते ब्रह्म चोर्जावाहकं तत्त्वं भवति, येन विना कस्यापि पदार्थस्य प्राणिनो वा जीवनं न सम्भाव्यम्। पदार्थानां जीवनं चोत्पत्तिस्थितिलयात्मकमेव।
५. मूलतत्त्वमेकं नित्यमव्ययमक्षरमविनाशि चेति, तस्य क्षरत्वं परिणामत्वमेव बोधयति। एतस्मादेव कारणादूर्जायाः पदार्थभावेन पदार्थस्य चोर्जाभावेन परिवर्तनं सम्भाव्यते।
६. मूलतत्त्वस्य सिद्धिरनुमानेन भवितुमर्हति। भवतु नाम तद् ब्रह्म प्रकृतिः परमाणुर्वा।
७. एकमेव मूलतत्त्वं प्रयोजनवशाद् ब्रह्म प्रकृतिः परमाणु इत्यादिपदवाच्यं भवति। सच्चिदानन्दस्वरूपात्मकं ब्रह्म चैतन्यस्य हेतुः, प्रकृतिः उपादानकारणं, परमाणुश्च त्रिगुणव्यापारस्याश्रयत्वेन कल्प्यते। त्रिगुणानां द्रव्यत्वे सत्यपि भावात्मकत्वं प्रसज्यते। तज्जन्यव्यापारवशादेव भारहीनेषु परमाणुषु द्रव्यमानं परमाणुभारश्च सम्भवति।

निष्कर्षतः वक्तुं शक्यते यत् त्रिष्वप्युक्तेषु मूलतत्त्वेषु कश्चित्सम्बन्धः साधर्म्यञ्च प्रतिपद्यते। यथा निर्गुणं ब्रह्म मायोपहितत्वात्सगुणो भूत्वा सृष्टेः जन्मादेः कारणं भवति तथैव निर्गुणाः परमाणवोऽणुदशायां सगुणाः भवन्ति। यथा पूर्वमुल्लेखितं यद् ब्रह्माण्डे शरीरे वा ब्रह्मणः स्थितिः बहुधा नाभौ प्रसिद्धा। तत्र च नाभौ परमाणोः केन्द्रे यदनन्तोर्जाकोषः विद्यते तन्मूलतोऽव्यक्तचैतन्यमेवेति वक्तुं शक्यते। एतस्मादेव कारणात्परमाणुषु क्रिया जायते। दर्शनविज्ञानयोरुभयत्रापि समस्यैषा तिष्ठति यन्निष्क्रियेण तत्त्वेन क्रिया कथमुत्पद्यते? अत्र विचारणीयं यन्निष्क्रियाः परमाणवः यदा निष्क्रियामूर्जां दधति तर्हि गणितीयसिद्धान्तानुसारेण तेषु धनावेशः सक्रियतां (कम्पनं) जनयति। साङ्ख्यदर्शनमेनामवस्थां प्रकृतिपुरुषसंयोगरूपेण स्वीकृत्य तं संयोगं प्रकृतेः स्वभावमेव मन्यते। स्मरणीयमस्ति यत्साङ्ख्याः प्रकृतेः कर्तृत्वसामर्थ्यं स्वीकुर्वन्तोऽपि पुरुषं (चैतन्यमूर्जां) विना निष्क्रियत्वमेव तस्याः स्वीकुर्वन्ति।



# तन्त्रागमेषु शिवः

भारतीयसंस्कृतेः मूलभूतवैशिष्ट्यं तस्या आध्यात्मिकं दार्शनिकं च चिन्तनमिति प्रथितमेव। नैके पन्थानः सम्प्रदायाः परम्पराः उपायाः वा सन्तोऽपि यदेकत्वानुभूतिः दृश्यते, सा वस्तुतः तस्याः व्यापकत्वमौदार्यं च बोधयति। 'एकं सद् विप्रा बहुधा वदन्ति' इति विचारः न केवलं भावात्मकस्तरेऽपितुं तात्त्विकस्तरेऽपि किमपि चिरन्तनं सत्यमुद्घाटयति। विविधैः नामभिराख्यातं तत्सत् जगतः कारणम् इति स्वीक्रियते, तत्त्वज्ञैः। तत्तत्त्वस्योपदेष्टारः सम्प्रदायाः ग्रन्थाश्चापि विविधाः ख्याताः। वेदान्तिनः ब्रह्मपदेन साङ्ख्याः प्रकृतिरिति मीमांसकाः कर्मेति नैयायिकाः ईश्वर इति शैवाः शिव इति वैष्णवाः विष्णुरिति पदेनैतच्छक्तेरुपासनं कुर्वन्ति।

तत्र शिवः न केवलं भारतीयसंस्कृतेः सांस्कृतिकचेतनायाः धार्मिकविश्वासानां वा प्रतीकत्वेन स्मर्यतेऽपितु पदार्थमात्रस्य श्रेष्ठभद्रकल्याणकरस्वरूपाधायकतत्त्वत्वेन स्वीक्रियते। शक्तिस्वरूपः जगदम्बायाः पतिः, नीलकण्ठः, ईश्वरः, परमेश्वरो वा शङ्कर आशुतोषः, उमारमणः विश्वम्भरः शिव एकतः श्रद्धाभक्त्योः विषय इति दृश्यते लोकेऽपरतः जीवभूतानां पशूनां जन्मबन्धरूपपाशस्य नियन्ता पतिरिति मतः। विशेषतः शैवागमेषु तत्त्वानां मुख्यं त्रितयं पतिपशुपाशा इति प्रोक्तं, तत्र पतिरूपेण शिवस्य प्रतिष्ठा वर्तते। यथोक्तम् शैवागमेषु –

**तत्र पतिः शिव उक्तः पशवोऽणवोऽर्थपञ्चकं पाशाः।**

शिवस्तत्र वेदेषु पुराणेषूपनिषत्सु तन्त्रागमशास्त्रे च बहुशः बहुधा च विवेचितः। 'यो वः शिवतमो रसः... इत्यादि मन्त्रेषु गुणवत्तारूपेण, श्वेताश्वतरादिषूपनिषत्सु परमतत्त्वरूपेण शिवपुराणादिषु परमेश्वररूपेण तन्त्रागमेषु च शक्तिमद्रूपेण शिव उपासितः। यद्यपि सर्वमपि वाङ्मयं परस्परमविरोधितया भासते, तथाप्यत्र तन्त्रागमसाहित्यस्य परिप्रेक्ष्ये शिवस्य स्वरूपनिरूपणमभीष्टमिति कृत्वा प्रथमं तावत्तन्त्रागमस्य परिचयोऽपेक्ष्यते।

सामान्यतः शिवतत्त्वस्य प्रोक्तारः सम्प्रदायाः पाशुपतः शैवः कालामुखः कापालिकश्चेति चतुर्विधाः मन्यन्ते। तेषामुपदेशकाः ग्रन्था आगमा इत्युच्यन्ते। तत्त्ववैशारदीकारः व्युत्पत्तिलभ्यमर्थं विस्तारयन्नागमस्य परिभाषामभ्युदयनिःश्रेयसोपायार्थे करोति–

**आगच्छति बुद्धिमारोहति यस्मादभ्युदयनिःश्रेयसोपायः स आगमः।**

उक्तपरिभाषानुसारेणागमानां द्वैविध्यं प्रतिपद्यते। भौतिकविध्युपदेष्टारोऽभ्युदयसाधका आगमाः परमैश्वर्यसाधकाश्च निःश्रेयसप्रा आगमाः। आगमशास्त्रे पञ्चमुखशिवस्य वक्त्रेभ्य उमामुखे गतो वासुदेवेन च मतो विद्योपदेशो वा आगम उक्तः। यथोक्तम्–

**आगतं शिववक्त्रेभ्यः गतं च गिरिजामुखे।**
**मतं श्रीवासुदेवेन आगमस्तेन कीर्तितः।**

एवमागमविभागः शिववक्त्रस्थितिवशात् पूर्वाम्नायः, दक्षिणाम्नायः पश्चिमाम्नायः उत्तराम्नायः ऊर्ध्वाम्नायश्चेति क्रियते। केचिच्छिवस्य गुप्तमुखादुत्पन्नोऽध आम्नाय इति षष्ठमागममपि स्वीकुर्वन्ति। अभिनवगुप्तपादाचार्यः आगमस्य तक्नीकपक्षमुद्घाटयन् तमागमं स्वीकरोति य आसमन्तादर्थं गमयति। स्मरणीयमस्ति यच्छैवसिद्धान्तवादिनः सर्वेषां विषयाणां प्रथमोपदेष्टृतया शिवस्य प्रतिष्ठां प्रतिपादयन्ति। एवं मूलभूतसिद्धान्तानां तत्त्वानां पदार्थानां च स्वरूपं येभ्यो ग्रन्थेभ्यः ज्ञायते बोध्यते ते ग्रन्था आगमा उच्यन्ते। अस्मिन्नर्थे शिव एवागमशास्त्रस्य विषयः, सैव च तस्य भोक्ता प्रोक्ता। यत्किञ्चिदप्येतावत्प्रतिपादितं वर्तते तेन शिवस्य तादात्म्यं प्रतिपद्यते। यथा सोमानन्दः शिवदृष्टौ स्वीकरोति–

**प्रतिपादितमेतावत्सर्वमेव शिवात्मकम्।**
**न स्वबुद्ध्या शिवो दाता शिवो भोक्तेति शास्त्रतः।।**

अस्तु, आगमानामङ्गत्वेनाभ्युदयनिःश्रेयसोपदेष्टारः ग्रन्थाः तन्त्रत्वेनावगम्यन्ते। मूलतो ज्ञानविस्तारकं शास्त्रं तन्त्रमित्युच्यते। तनु विस्तारे इति धातोः ष्ट्रन् प्रत्यययोगाद् व्युत्पन्नस्यास्य पदस्य व्याख्या कामिकागमे सविस्तरेण कृता वर्तते–

**तनोति विपुलानर्थान् तन्त्रमन्त्रसमन्वितान्।**
**त्राणं च कुरुते तस्मात्तन्त्रमित्यभिधीयते।।**

मन्त्रो वस्तुतः विज्ञानम् (अर्थानां पदार्थानां तत्त्वात्मकं यथार्थस्वरूपात्मकं) भवति, तन्त्रञ्च तस्योद्देश्यानुसारि प्रकल्पविस्तारोऽभिव्यक्तं स्वरूपं वा भवतीति वक्तुं शक्यते। सत्त्वरजस्तमःप्राधान्येन तन्त्राणि त्रिविधान्युक्तानि। ये आगमाः सात्त्विकास्ते तन्त्रं, राजसा आगमाः यामलं तामसाश्चागमाः डामर इत्युच्यन्ते। एवं यत्र तन्त्रागम इति पदस्याख्यानं क्रियते तत्र सात्त्विकतन्त्रतयैवावेक्षणीयम्। ये आगमाः शिवमेव प्रथमतत्त्वरूपेण जगतः जन्मस्थितिलयकारणतया च प्रथयन्ति ते शैवागमा शैवतन्त्रं वेत्युच्यन्ते। अथ शैवागमतन्त्राणां प्रवर्तकः स्वयं शिवः प्रोक्तः।

यद्यपि साधनोपासनानां पद्धतिभेदेन नैके मार्गाः सन्ति शैवतन्त्रागमानां, किन्तु

पाशुपतं शैवसिद्धातमतं वीरशैवमतं प्रत्यभिज्ञाशास्त्रं रसेश्वरमतं चेति शिवस्य प्रतिपादकाः प्रमुखाः तन्त्रागमाः सन्ति। अत्र केषुचित्तन्त्रागमग्रन्थेषु प्रतिपादितं शिवस्य स्वरूपं निरूप्यते। प्रसङ्गतः पाशुपतमतं पञ्च पदार्थेषु कार्यकारणयोगविधिदुःखान्तेष्वन्यतमं कारणं महेश्वरं स्वीकरोति यस्यापरमभिधानं पतिरित्यस्ति। अन्ये पदार्थाः महेश्वरप्राप्तौ साधकाः भवन्ति। वीरशैव इति वा लिङ्गायत इति वा शक्तिविशिष्टाद्वैत इति वा सिद्धान्तः सूक्ष्मचिदचिद्विशिष्टशक्तितया परशिवं प्रख्यापयन्ति। शैवसिद्धान्तमतं शिवः शक्तिः बिन्दुश्चेति रत्नत्रयं पतिः पशुः पाशश्चेति पदार्थत्रयं च स्वीकुर्वन्ति। तत्र शिवः शुद्धतत्त्वमयो जगतः कर्ता चोक्तः। यथा श्रीमत्करणे उक्तम्–

**शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तो हि ते प्रभोः।**

शिव एव सर्वेषां तत्त्वानामधिष्ठाता उपादानं चेति। शिवस्य समवायिनी परिग्रहश्चेति शक्तिद्वयं मतम्। तत्र समवायिनी चिद्रूपा परिणामिनी निर्विकारा शिवसमवेता च तादात्म्यसम्बन्धेनावस्थिता शिवस्य स्वरूपमेवेत्युक्तम्। परिग्रहशक्तिरचेतना परिणामशालिनी च शुद्धा शुद्धरूपा बिन्दुश्चेत्युच्यते। शुद्धा तत्र सात्त्विकजगत उपादानकारणं माया, अशुद्धा च प्राकृतजगत उपादान कारणं माया भवति। पतिपदवाच्यः शिवो नित्यमुक्तस्वभावसिद्धो निर्मलो निरतिशयोऽर्थ–ज्ञानक्रियाशक्त्या समन्वितः पञ्चमन्त्रतनुः प्रोक्तः। ईशानमन्त्रस्तस्य मस्तकः तत्पुरुषमन्त्रः मुखं घोरमन्त्रो हृदयं वामदेवमन्त्रो गुह्याङ्गः सद्योजातमन्त्रश्च पाद उक्तः। सः शिवः पशूनां पाशक्षेपणार्थं (बन्धार्थं) ध्यानयोगार्थञ्च शरीरं दधाति। ईशानादिजन्यमेतच्छरीरं शाक्तमुच्यते।

पशूनां पाशविमोक्षणाय प्रवृत्तः पशुपतिः सत्तत्त्वतया वेदान्तोक्तस्य ब्रह्मणः समकक्षमेव। अथर्ववेदेऽप्युक्तम्–

**तस्माद् ब्रह्म तदेतत् पाशुपतपशूपाशविमोक्षणाय।**

पाशुपतशैवमतस्य सिद्धान्तरूपेण पशुपतिपाशाः शिवस्यैव स्वरूपाण्युक्तानि। क्षरप्रकृतिः पाशोऽक्षरजीवः पशुः क्षराक्षरश्च पशुपतिः शिव एव। तादात्म्यात्मके स्वरूपे सत्यपि पशुत्वे मलं कारणं भवति।

द्वैतप्रतिपादकेषु शैवागमेषु पाशानां (मलानाम्) विनाश एव शिवत्वलाभ इति स्वीक्रियते। पशुपतिः महेश्वरो वा सृष्टिसंहारानुग्रहेषु समर्थः शक्तिमान् पूर्णश्चोक्तः। सः बिन्दुनादव्योममन्त्रभुवनविग्रहाणां षड्वस्तूनां स्वरूपवानस्ति। यथोक्तं तन्त्रालोके–

**बिन्दुनादस्तथा व्योममन्त्रो भुवनविग्रहौ।**
**षड्वस्त्वात्मा शिवो ध्येयः फलभेदेन साधकैः।।**

तन्त्रालोकः– पृ० १००

सिद्धान्तशैवाः नादबिन्दुरूपेण देवीशिवौ मन्यन्ते। पितृपूजामेव परमानन्दस्वरूपं मत्वा शिवलिङ्गस्योपासनां कुर्वन्ति। यथा शिवपुराणे उक्तम्–

**माता देवी बिन्दु रूपा नादरूपः शिवः पिता।**
**पूजिताभ्यां पितृभ्यां तु परमानन्द एव हि।।**

पौष्करागमानुसारेण शिवः संसारस्य स्रष्टाऽस्ति। शक्तिस्तस्योपकरणभूतकारणं माया चोपादानकारणमिति मन्तव्यम्। ईश्वरः स्वशक्त्या समस्तं विश्वं व्याप्य तिष्ठत्यतः संसारात्पृथक् न भासते। एवं शिवशक्त्योरपृथक्सिद्धिः प्रतिपद्यते। शक्तिः वस्तुतः विशुद्धचेतनारूपशिवजडप्रकृत्योश्च मध्यस्था काचिच्छृङ्खला वर्तते। शिवस्य व्यापाराणां भेदक उपाधिः शक्तिरिति (पौष्कर आगम–२–१)। शिवज्ञानबोधकारः शिवस्य व्यापारेषु शक्तिमेव कारणं मन्यते, यतोह्युपादानं प्रकृतिः मृद्वज्जडाऽस्ति। गमनशीलं जगत् स्वयं परिवर्तनस्य परिणामस्य वा कारणं भवितुं नार्हति। शिवोऽसावात्मप्रकाशवपुः स्वतन्त्रः उक्तः, यः स्वातन्त्र्यवशादेवात्मस्वरूपं संच्छाद्येच्छाज्ञानक्रियाशक्तिवशाच्छाम्भव–शाक्ताणवोपायैः ज्ञानमार्गं प्रथयति यथोक्तं तन्त्रसारे–

**आत्मप्रकाशवपुरेष शिवः स्वतन्त्रः**
**स्वातन्त्र्यनर्मरभसेन निजं स्वरूपम्।**
**संच्छाद्य यत्पुनरपि प्रथयेत पूर्णं**
**तच्च क्रमाक्रमवशादथ वा त्रिभेदात्।।**

तन्त्रसारः १/५

शैवागमेष्वाधृते प्रत्यभिज्ञादर्शने परमशिवस्य स्वातन्त्र्यं विमर्शरूपेण कल्पितम्। तदनुसारं यथा दर्पणे प्रतिबिम्बं दृश्यते तथैव विमर्शशक्त्या परमशिवः स्वान्तःस्थितं सकलमपि विश्वं परामृश्यात्मन्येव प्रतिबिम्बितं करोति। यथोक्तं तन्त्रसारे–

**अन्तर्विभाति सकलं जगदात्मनीह**
**यद्वद्विचित्ररचना मुकुरान्तराले।**
**बोधः परं निजविमर्शरसानुवृत्त्या**
**विश्वं परामृशति नो मुकुरस्तथा तु।।**

स देवः स्वतन्त्रश्चिद्रूपो भवति। प्रकाशस्तस्य स्वभावः, रूपप्रच्छादनं तस्य क्रीडामात्रम्, योगादणुरूपतां दधाति। विकल्पात्मककर्मभिः स्वयं कल्पिताकार आत्मानं बध्नातीत्येव तस्य स्वातन्त्र्यम्–

**देवः स्वतन्त्रश्चिद्रूपः प्रकाशात्मा स्वभावतः।**
**रूपप्रच्छादनक्रीडायोगादणुरनेककः।।**

**स स्वयं कल्पिताकारः विकल्पात्मककर्मभिः।**
**बध्नात्यात्मानमेवेह स्वातन्त्र्यादिति वर्णितम्।।**

तन्त्रालोकः :– १३/१०३–१०४

एवं सृष्टिस्थितिलयेषु शिवः यन्मायामपेक्षते, तच्च शिवेच्छयैव–

**इत्थं सृष्टिस्थितिध्वंसत्रये मायामपेक्षते।**
**कृत्यै मलं तथा कर्म शिवेच्छैवेति सुस्थितम्।।**

तन्त्रालोकः– १३/११३

शिववार्तिके शिवस्य कल्पनं शुद्धनिरुपधिज्योतीरूपतत्त्वरूपेण क्रियते, तत्सन्धानं चात्मत्वविमर्श इति–

**शुद्धं निरुपधिं ज्योतीरूपं तत्त्वं शिवाभिधम्।**
**तत्सन्धानं तदात्मत्वविमर्शस्तेन वा भवेत् ।।**

शिववार्तिकम्– १६/७४

मालिनीविजयोत्तरतन्त्रे शिवः सर्वकृच्छान्तः सर्वज्ञः सकलो निष्कलोऽनन्तश्चोक्तः–

**तत्रेशः सर्वकृच्छान्तः सर्वज्ञः सर्वकृत् प्रभुः।**
**सकलो निष्कलोऽनन्तः................।।**

मालिनीविजयोत्तरतन्त्रम् १७–१८

स एव शिवः शुद्धामृतमयात्मा विश्वेशः परः परमात्मा ब्रह्मेति श्रीनेत्रतन्त्रम्–

**विधाता यो नमस्तस्यै शुद्धामृतमयात्मने।**
**शिवाय ब्रह्मविश्वेशपराय परमात्मने।।**

श्रीनेत्रतन्त्रम् १–२

श्री नेत्रतन्त्रे शिवस्य यत्स्वरूपं वर्णितं, तद्वेदान्तोक्तब्रह्मणः स्वरूपवत् प्रतीयते। तदनुसारेण हि शिवः योगी सर्वगतः, सर्वदृक् सर्वकृत् कर्णैरश्रव्यो नासाऽघ्रेयः जिह्वयास्वाद्यस्त्वचाऽस्पृश्यश्चेतसाऽचिन्त्यः सर्ववर्णरसोज्झितोऽपि सर्ववर्ण–रसैर्युक्तोऽप्रमेयोऽतीन्द्रियस्तत्त्वस्वरूपः ज्ञेयः। तं ज्ञात्वा घोरात्संसारबन्धनात् क्षिप्रमेव मुक्तिः प्राप्तुं शक्यते (श्रीनेत्रतन्त्रम् ८/२१४, ५, २६, २८)।

तत्त्वतः सूक्ष्मचिदचिद्विशिष्टा शक्तिरेव परशिव इति वीरशैवसिद्धान्तः। तन्मते शिवः सच्चिदानन्दस्वरूपः सत्यः नित्योऽनादिरनन्तश्चास्ति शक्तिशिवयोरविनाभावः प्रसज्यते। पारिभाषिकरूपेण परशिवः स्थलपदवाच्यः यस्मिन्नेतच्चराचरं जगत्तिष्ठति लीयते च। स्थलस्य भेदद्वयमुक्तं– लिङ्गस्थलम् अङ्गस्थलं च। तत्राङ्गस्थलं शुद्धात्मा जीवो लिङ्गस्थलं च शिव उच्यते। उभयोः सामरस्यं परशिव इत्युच्यते।

तदेव ब्रह्मेत्युक्तम्। असावालयः सर्वभूतानां लोकानां लोकसम्पदां चेत्युच्यते। यदा शिव उपास्योपासकभावेन जगदुत्पादयितुमिच्छति तदा क्षोभात्सामरस्यं बिभेद्य स्वेच्छया सिन्धौ फेनोर्मिबुद्बुदवज्जगत्प्रपञ्चं तनोति। यथोक्तं सिद्धान्तशिरोमणौ–

**शिवतत्त्वात्समुत्पन्नं जगदस्मान्न भिद्यते।**
**फेनोर्मिबुद्बुदाकारो यथा सिन्धोर्न भिद्यते।।**

प्रत्यभिज्ञाशास्त्रानुसारेणापि परमशिवः स्वभित्तौ स्वेच्छया विश्वमुन्मीलयति। प्रकाशविमर्शात्मकः परमशिवः परासंवित् परावाक् परमेश्वरादिनामभिः ज्ञायते। तस्य विश्वात्मकं विश्वोत्तीर्णञ्चेति रूपद्वयमुक्तम् नानाप्रपञ्चात्मके जगति व्याप्तोऽपि सर्वथा परे विद्यते, योगीच्छावच्च जगच्चित्रं सृजति। यथोक्तं स्पन्दकारिकायाम्–

**निरुपादानसम्भारमभित्तावेव तन्वते।**
**जगच्चित्रं नमस्तस्मै कलानाथाय शूलिने।**

अस्मिन्तन्त्रें परमेश्वरस्य पञ्च प्रमुखाः शक्तयः विद्यन्ते – चिद्– आनन्द– इच्छा– ज्ञानं क्रिया चेति। चिच्छक्तिरेव विमर्श इत्युच्यते। आनन्दशक्तिस्तस्य स्वातन्त्र्यमिच्छा ज्ञानं क्रिया च तत्तद्विषयकं स्वातन्त्र्यमित्युक्तम्। चिदेव परमसत्ता मता यया विना शिवस्य कल्पनाऽसम्भाव्या। वस्तुतश्चिद्रूपो विमर्श एव प्रकाशस्य स्वातन्त्र्यप्रतीतिरिति वक्तुं शक्यते। 'सोऽहं शिव' इति प्रत्यभिज्ञा विमर्शवशादेव भवति। एषैव शक्तिः परमशिवस्यैश्वर्यमस्ति। चेतनत्वाच्छिवः प्रकाशात्मा नापितु प्रकाशविमर्शात्मको मतः। विमर्श एवैवं शिवस्य स्वातन्त्र्यमैश्वर्यं कर्तृत्वं स्फुरत्वं सारं हृदयं स्पन्द इति च ज्ञेयम्। तस्यैवान्तर्निमेषः सदाशिवतत्त्वं बाह्योन्मेषश्चेश्वरतत्त्वमुक्तम्।

शिव एव सर्वेषु भावेषु स्फुरदानन्दमयशरीरोऽनिरुद्धेच्छाशक्तिः ज्ञानक्रियाशक्ती प्रसारयति। यथोक्तं शिवदृष्टौ–

**आत्मैव सर्वभावेषु स्फुरन्निर्वृतचिद्वपुः।**
**अनिरुद्धेच्छाप्रसरः प्रसरद्दृक्क्रियः शिवः।।**

सर्वेष्वेव तन्त्रागमेषु येन केनापि नाम्ना या काऽपि शक्तिः शक्तयो वा शिवस्य मताः, किन्तु तत्त्वतः शक्तिशिवयोरभेदः स्वीकृतः। स्वातन्त्र्यशक्त्या सः कल्पिताकारवत्त्वं प्राप्नोति, विमर्शशक्त्या जगत्प्रपञ्चं सृजत्यन्याभिश्शक्तिभिस्तत्तत्कर्मसन्धानं करोति। विज्ञानभैरवतन्त्रे भैरवीभैरवयोः शक्तिशक्तिमतोः सर्वदाऽभेदः तथैव स्वीकृतः यथा वह्नेर्दाहिकाशक्तिस्तदभिन्ना भवति। शक्तिविशिष्टाद्वैतवादिनः लिङ्गायताः शक्तिविशिष्टजीव–शक्तिविशिष्टशिवयोर्विशिष्टाभेदं प्रतिपादयन्ति। परम–तत्त्वाच्छिवात्समुत्पन्नं चराचरात्मकं जगत् मृत्कुम्भवद्भासते। यथोक्तं सिद्धान्तशिरोमणौ–

**यस्मादेतत्समुत्पन्नं महादेवाच्चराचरम्।**
**तस्मादेव तन्त्रं भिद्यते यथा कुम्भादिकं मृदः।।**

शिवाद्वैतं साधयन् नन्दिकेश्वरः शिवमेवाव्ययं तत्त्वं मन्यते। तन्मते स्ववृत्तिमाश्रित्य चराचरात्मकं जगत् संसृज्य शिव एव जगति भासते। एतज्जगदाभासितं ब्रह्मैवेश्वरः।

एवं तन्त्रागमेषु यद्यपि विविधरूपेषु शिवः वर्णितः तथापि सिद्धान्ततः सर्वत्रैव केषुचित् बिन्दुष्वविरोधो दृश्यते। सामान्यतः शिवतत्त्वस्य स्वरूपं निम्नलिखितरूपेण स्पष्टीकर्तुं शक्यते–

१. परमात्मा शिवोऽस्ति यस्य सिद्धिः जगतः जडतापरिवर्तनशीलताऽकर्तृतावशाच्च भवति।
२. शिवः चेतनः स्वतन्त्रः सर्वज्ञः सर्वकृत् दिक्कालानपेक्ष इन्द्रियातीत उपाधिरहितः स्वयंप्रकाशश्चास्ति।
३. स एव जगतः सृष्टिस्थितिलयानां कारणं भवति। समस्तं दृश्यं जगत्तस्योन्मेषः संहारश्च तस्यैवान्तर्निमेषो भवति।
४. परशिवः स्वेच्छया क्रीडावशात् स्वातन्त्र्यशक्त्या विश्वोन्मेषं निमेषं वा करोति।
५. विश्वात्मा विश्वोत्तीर्णश्चेति तस्य रूपद्वयं वर्तते।
६. चितिरानन्द इच्छा ज्ञानं क्रिया चेति तस्य प्रमुखा शक्तयः।
७. शक्तिः शिवस्य स्वरूपं भवति। मूलतः तस्यैकैव शक्तिर्भवति। सा शक्तिः विमर्शाख्या। कार्यवशात्तस्या एव नानाशक्तिभेदाः दृश्यन्ते।

स्वरूपतः शक्तिशक्तिमतोरभेदोऽस्ति। तत्र च तादात्म्यसम्बन्धः प्रसज्यते। अनयोः शिवशक्त्योः चन्द्रचन्द्रिकयोरिव सम्बन्ध इति शिवदृष्टिकारस्य मतम् । उक्तं हि–

**न शिवेन विना देवी न देव्या च विना शिवः।**
**नानयोरन्तरं किञ्चिच्चन्द्रचन्द्रिकयोरिव।।**

अथ च–

**न शिवः शक्तिरहितो न शक्तिर्व्यतिरेकिणी।**
**शिवः शक्तस्तथा भगवानिच्छया कर्तुमीहते।।**
**शक्तिशक्तिमतोर्भेदः शैवे जातु न वर्ण्यते।।**

शिवदृष्टिः ३/२/३

योगीच्छावन्निरुपादानसम्भारं विस्तारयन् शिवोऽखिलभेदेन वैचित्र्यसहस्रैः स्फुरतीति प्रतिज्ञाहृदये (सूत्रम् ३) सूत्रितम्।

तन्त्रागमेषु विविधरूपेण स्मृतः शिवः श्रुतिष्वात्मा प्रत्यगात्मा स्वयंज्योतिश्चोक्तः–

**अन्तर्ज्योतिर्बहिर्ज्योतिः प्रत्यग्ज्योतिः परात्परम्।**
**ज्योतिर्ज्योतिः स्वयंज्योतिरात्मज्योतिः शिवोऽस्म्यहम्।।**

ज्योतिरेव प्रकाशः। शिव इत्यस्य शब्दस्य चतुःमात्रास्वेव समग्रप्रपञ्चः समाहितः। यथोक्तं यत् शकारः विराट्रूपमिकारो हिरण्यगर्भो वकार ईश्वररूपोऽकारश्च परब्रह्मरूपं भवति। शकार उत्पत्तिरूपमिकार स्थितिरूपं वकारः प्रलयरूपमकारश्च मायातीतरूपं भवति। शकारो जाग्रतरूपमिकारः स्वप्नरूपं वकारः सुषुप्तिरूपमकारश्च तुर्यरूपं भवति। शकारो विश्वमिकारस्तैजसो वकारः प्राज्ञोऽकारश्चात्मेति। शकारः सत्त्वमिकारः रजो वकारस्तमोऽकारश्च गुणातीतरूपमुक्तम्। शकारो ज्ञाता इकारो ज्ञानं वकारो ज्ञेयमकारश्च शुद्धसंविदिति ज्ञेयम्। एवमेव शकार आधिभौतिकरूपमिकार आध्यात्मिकं रूपं वकार आधिदैविकरूपमकारश्च निरुपाधिकतत्त्वमित्युक्तम्। एवं स्थलूतः सूक्ष्मपर्यन्तं सर्वं शिवमयम् दृश्यते। अतः शिव एवोपास्यः साक्षात्करणीयश्च।



# प्राच्यवाङ्मये भूगर्भचिन्तनम्

समस्तानामपि अभिधेयज्ञेयपदार्थानामाकरः ब्रह्माण्डं नानावैचित्र्यमयं दृश्यादृश्यं चेतनाचेतनात्मकं वस्तुजातं गर्भे दधत् सनातन्याः मानवजिज्ञासायाः केन्द्रबिन्दु सत्तिष्ठति। बौद्धिकविकासस्य प्रथमक्षणत आरभ्याद्यपर्यन्तं प्रकृतेः रहस्यान्युद्घाटयितुं तस्याः सूक्ष्मनिरीक्षणे दत्तावधानाः मनीषिणः काले–काले तत्तद्विषयकान् प्रत्यक्षादिप्रमाणसिद्धान् परिणामान् जिज्ञास्वध्येतृणां ज्ञानपिपासाशमनार्थमुपस्थापयन्तः सन्ति। अनन्त–कालपर्यन्तञ्चायं क्रमोऽविच्छिन्नतया चलिष्यति।

ज्ञानविज्ञानयोः विकासपरम्परायाः स्रोतस्त्वेन वाङ्मयस्यान्यूनं महत्त्वं भवति। विश्वस्य प्राचीनतमं समृद्धतमं च संस्कृतवाङ्मयं समस्तानामप्याधिभौतिकाधिदैविका–ध्यात्मिकरहस्यानामधिकतमचिन्तनसरणिं श्रङ्खलाबद्धरूपेण प्रतिष्ठापयतीत्यत्र नास्ति कश्चित्पूर्वाग्रहः। विविधविषयकविज्ञानं संस्कृतवाङ्मये प्रायः रूपद्वये प्राप्यते। प्रथमं विविधविषयकविज्ञानानामन्योऽन्यसम्बद्धविवेचनम्, द्वितीयञ्च प्रतिविषयं पृथग्विवेचनम्। प्रथमदृष्ट्या समस्तस्य वैदिकपौराणिकवाङ्मयस्योपयोगित्वं वर्तते। द्वितीयदृष्ट्योप–निषदः धर्मशास्त्रम् वेदाङ्गः दर्शनवाङ्मयमर्थशास्त्रं तदन्तर्गताश्च कलाः अन्यच्च विविधविषयात्मकं शास्त्रीयवाङ्मयं काव्यादिकञ्चेति महती परम्परा विद्यते संस्कृतवाङ्मयस्य। मुख्यतया भूगर्भविज्ञानस्य सम्बन्ध आधिभौतिकचिन्तनेन ज्ञेयः। **'भवत्यस्यामिति भूः पृथिवी स्थानमात्रम् वेति'**, कोशवचनम्।[1] भुर्भुवः स्वरिति त्रिविधास्वाहृतिष्वन्यतमा भूः तन्नामकेष्वेव लोकेष्वाधारभूतः प्रथमो लोकः। स च भूर्लोकः भूगोलकं पृथिवीगोलकं वेति व्यवह्रियते, यद् सृष्ट्यादौ ब्रह्माण्ड–रूपहिरण्यगर्भस्फोटादधःकपालभूतमण्डकटाहरूपेण हिरण्यगर्भेण धृतम्। प्रथमं पृथिवीयं जलरूपा आसीत्।[2] सा च स्फोटजन्योर्जायुक्तत्वादत्युष्णाऽतः मानवानां निवासयोग्या नासीत्।[3] पुनश्च भौतिकपरिवर्तनैरावरणभूतजलमण्डलेन गर्भरूपेण धृता पृथिवी यथा–यथा शीतला अभूत् तथा–तथा शैलीयस्तराणां निर्माणमजायत। अस्मिन् काले पृथिवी वर्तमान–कठोरपृष्ठतां सप्तायामेभ्यः प्राप्ता–

**आपः फेनः मृत् सिकता शर्करा अश्मा पृथिवी।**[4]

भौतिकविकासक्रमे पृथिवी पृष्ठभागे उच्चावचेषु विभज्यमाना त्रिचतुर्थांशभागे

सप्तसागरान् चतुर्थांशभागे च धरातलं बिभ्रती 'सर्वत्राम्भोधिपर्वतद्वीपैः कन्दुकपृष्ठम्' इत्युक्ता।[५] आकाशेऽन्तरिक्षे भूगोलकम् स्वशक्त्या (गुरुत्वाकर्षणबलेन) निराधारं तिष्ठते।[६] अस्य भूगोलकस्य मानं–शतानामष्टकं कर्णः, तस्य द्विगुणः व्यासः, षष्ठ्यधिकपञ्चसहस्रयोजनानि (५०६०) सप्तषष्ठ्यधिकोनपञ्चाशत्शतयोजनसमः (४९६७) द्वात्रिंशत्शतयोजनसमो (३२००) वा (क्रमशः सौरोक्तः भास्करोक्तः पञ्चसिद्धान्तोक्तः) परिधिः इत्यनुमितम्।[७] अस्य पृष्ठस्य क्षेत्रफलं ७८५३०३४ (युगगणत्रिंशच्छराष्टाद्रयो) योजनात्मकमनुमितम्।[८]

भूगर्भीयाध्ययनस्यापेक्षया पृथिव्याः भौतिकसंरचनायाः परिज्ञानमावश्यकं स्यात्। महाभूततयाऽकाशादिक्रमेण पञ्चमक्रमेणोत्पन्ना पृथिवी पाञ्चभौतिकी मन्यते, यतोहि पृथिव्यामाकाशादीनां चतुर्णां गुणैः सह पृथिव्या आत्मगुणः विद्यते। तदनुसारमेव पृथिवीगोलकमपि शब्दस्पर्शरूपरसगन्धगुणमाकाशवाय्वग्जिलेन युक्तत्वादेकमात्रं प्राणिनां जीवनोपयोगि वातावरणं दधद् वर्तमानमस्ति। एवं सत्यपि मूलतः पाञ्चभौतिकसृष्टौ पृथिव्याः पाञ्चभौतिकत्वं विशिष्यते। उल्लेखनीयमस्ति यत्संस्कृतवाङ्मये सृष्टिविचारे पञ्चीकरणरूपेण पञ्चभूतानां परस्परमनुप्रवेशतया सापेक्षव्यवहारः भवितुमर्हतीति ज्ञापितम्। एवं पृथिवी महाभूततया १/४ प्रतितत्त्वमाकाशदिभिः व्याप्ता किन्तु भूमण्डलरूपे पृथिवीलोके आकाशादीनां स्थितिः भूपृष्ठे भूगर्भे च स्वतन्त्रतया विद्यते। इत्येव पृथिव्याः पाञ्चभौतिकत्वस्याभिप्रायः। वराहमिहिरोऽन्ये च ज्योतिर्विदोऽस्मिन्नेवार्थे पृथिव्याः पाञ्चभौतिकत्वं स्वीकुर्वन्ति–

**पञ्चमहाभूतमयस्तारागणपञ्जरे महीगोलः।**[९]

**ब्रह्माण्डमध्यसंस्थानो भूगोलः पाञ्चभौतिकः।**[१०]

स्मरणीयमस्ति यद्भूमण्डले (पृथिवीकक्ष्यायाम्) द्वादशयोजनैराकाशो जलवायुमण्डलं बिभ्रत् प्राणिनां जीवनाधारत्वेन कल्प्यते। जलं तु पृथिव्या रस एवोक्तम्–

**'आपो पृथिव्या रसः।'**

ऐतरेयोपनिषदि चतुर्षु लोकेषु पृथिव्या अधस्तादापः चतुर्थलोकत्वेन स्मृतः–

**स इमॉल्लोकानसृजत्। अम्भो मरीची मर आपोऽम्भः परेण द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः पृथिवी मरो याऽधस्तात्ता आपः।**[११]

अग्निश्च पृथिव्याः गर्भे तिष्ठति। शतपथब्राह्मणेऽग्निगर्भा पृथिवीत्युक्तमेव। 'अपां पृष्ठोऽसि योनिरग्नेः', 'अग्निर्भूम्यामोषधीषु', 'याऽप सर्प विजमाना विमृग्वरी यस्यामासन् अग्नयो ये अप्स्वन्तः', 'अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित्' इत्यादि वेदवचनैः 'अग्निगर्भा पृथिवी' इति ब्राह्मणवाक्येन 'यथाग्निगर्भा पृथिवी द्यौरिन्द्रेण

गर्भिणी' इत्याद्युपनिषद्वचनेन पृथिव्या अग्निगर्भत्वं प्रमाणितं भवति।[१२] ऋग्वेदे पृथिव्याः नाभौ जलस्य बलेन तत्त्वानामवधारणं स्वीक्रियते–

**नाभा पृथिव्या भुवनस्य मज्मना।[१३]**

अन्यत्र पृथिवी 'गर्भरसा' इत्युक्ता–

**माता पितरमृत आबभाज धीत्यग्रे मनसा सं हि जग्मे।**
**सा बीभत्सुर्गर्भरसा निबद्धा नभस्वन्त इद् वाकमीयुः।[१४]**

यजुर्वेदेऽपां पृष्ठे स्थिता पृथिवी व्यचस्वती पृथस्वती चेत्युक्ता–

**प्रजापतिष्ट्वा सादयत्वपां पृष्ठे समुद्रस्येमन्।**
**व्यचस्वतीं पृथस्वतीं पृथस्व पृथिव्यसि।।[१५]**

अत्र 'व्यचस्वती' इति पदेन भूमण्डलस्यान्तराकाशः 'अपां पृष्ठे' चेति पदेन भूपृष्ठीयमण्डलमध आभ्यन्तरजलमण्डलं बोद्धव्यम्। यत्र चाकाशस्तिष्ठति तत्र वायोः विस्तारो भवति। बृहत्संहितायां भूकम्पस्यानेकेषु कारणेषु भूगर्भीयजलजसत्त्वानां विक्षोभोऽन्यतमं कारणमुक्तम्–

**'वारुणस्योपरि पृथिवी सशैलवनकानना।**
**स्थिता जलजसत्त्वाश्च संक्षोभाश्चालयन्ति गाम्।।[१६]'**

अत्रोक्तं 'वारुण'मिति पदं भूगर्भीयजलमण्डलमेवेति वक्तव्यम्। तत्र च सत्त्वानां स्थितिः लोकेऽपि दृश्यते। भूगर्तेषु ह्यगाधेषु निम्नभागेषु सर्पपिपीलिकामण्डूकादयो वसन्ति। पुराणेषु पातालानामधोऽनन्तगुणवत्तामस विष्णोः स्थानस्योल्लेखः प्राप्यते–

**'पातालानामधश्चास्ते शेषो विष्णुश्च तामसः।**
**गुणानन्त्यात्स चानन्तः शिरसा धारयन् महीम्।।'[१७]**

विचारणीयं यद्विष्णुरग्नेः पर्यायः। तामसो विष्णुः पृथिव्या गर्भे केन्द्रीयमण्डले स्थितोऽग्निरेवेति वक्तव्यं, यतोहि तमोगुणत्वं पृथिव्या इष्यते। अग्निश्चोर्ध्वशिख इति नियमः। एवं भूगर्भे योऽग्निः सर्वप्रकाशकः स तामसत्वात् गुरुत्वाकर्षणयुक्तः सन् पृथिव्याः पृष्ठीयगुरुत्वाकर्षणं नाभिमभि केन्द्रयति। एतद्बलेनैव पृथिवी अन्तरिक्षेऽधोऽपतन्ती स्वाक्षे च भ्रमन्ती तिष्ठति। आधुनिकभूगर्भवेत्तारः भूगर्भे नाभौ प्रभूते गुरुचुम्बकीयतत्त्वे लौहनिकिले उपस्थिते मन्यन्ते ये, अत्युच्चतापतया द्रवरूपे तिष्ठतः।

अस्मिन् विषये विचारणीयं यत्तामसो विष्णुः उक्ततत्त्वद्वयस्यैव स्वरूपं स्यात्। समस्तो हि तैजसपदार्थोऽग्निरूपो भवतीति नियमः। एवं भौतिक–सङ्घटनदृशा पृथिव्याः गर्भेऽग्निजलयोः प्राधान्यमस्ति आकाशवायू चान्तरिकावकाशस्य निर्धारकौ

भवतः। अग्निजलवायूनां संयोगेन पुरीष्योऽग्निः जायते, यस्यानेकेषु वैदिकमन्त्रेषूल्लेखः प्राप्यते। तस्योपयोगः प्राकृतिकसंसाधनरूपेण क्रियते।

## भूगर्भीयसंरचना

पाञ्चभौतिके महीगोले भूतानां स्थितिः कीदृशी अस्ति? कियद्भागे वाऽकाशोऽस्ति कियत्कस्मिंश्चांशे जलमग्निर्वायुर्वास्ति? भूगर्भः जलीयोऽस्त्याग्नेयो वा वायव्यो वेत्यादयः प्रश्ना आधुनिकभूगर्भवेतृणामनुसन्धानजनकाः सन्ति। निष्कर्षतयाऽधुनातमानुसन्धानैश्च ते भूगर्भीयसंरचनायां प्रमुखतया शैलीयस्तराणि स्वीकुर्वन्ति। पृष्ठीयभागोऽवसादीयशैलेः निर्मितो भवति यत्तापीयोष्मणा जलीयापरदनेन चोच्चावचान् रचयन्ति। तदधः सैकताः शार्कराश्च शैलाः (स्फाटकीय – सिलिकेट– इत्याख्याः क्षारीयशैलसंरचनाः), पैठिक– अतिपैठिकाग्नेयशैलाः, मिश्रितशैलाः (अश्मापाषाणादिकानां मिश्रितसंरचना) ततश्चाधः केन्द्रीयधातुपिण्डोऽस्ति। पृथिव्याः गर्तेष्वभिकेन्द्रं गुरुतराणि तत्त्वानि तिष्ठन्ति।

आधुनिक–भूगर्भवेत्तारः भूपृष्ठीय–स्तरस्याधः (अवसादिशैलानामधः) शिथिलाणूनां शैलानां (सियाल इति) स्थूलत्वं षष्टि किलोमीटराणि, ततोऽधः स्फाटकीयस्तराणि ११४० किलोमीटराणि, मिश्रितमण्डलं (धातुस्फाठकीयमिश्रणम्) १७०० किलोमीटराणि, ततोऽधश्च केन्द्रीयमण्डलं स्वीकुर्वन्ति। डेली इत्याख्य आधुनिकविद्वान् स्थलमण्डलं ८० किलोमीटरात्मकं, दुर्बलतामण्डलं ३६० किलोमीटराणि मध्यमण्डलं २४०० किलोमीटरात्मकं केन्द्रमण्डलं च ६४५ किलोमीटरात्मकं अनुमिनोति। एवं भूकर्णः ३४८५ किलोमीटराणि स्यात्। संस्कृतवाङ्मये ज्योतिर्विद्भिः भूकर्णः ८०० योजनानि (प्रायः ४००० किलोमीटराणि) स्वीकृतः–

**योजनानि शतान्यष्टौ भूकर्णो...........।**[१८]

संस्कृतवाङ्मये प्रायः सर्वत्रैव भूगर्भस्य सप्तस्तराणि स्वीकृतानि। ऋग्वेदे पृथिव्या सप्तधामानि तेभ्यः परे विष्णोः विचक्रमणमुक्तम्–

**अतो देवा अवन्तु नो यतो विष्णुर्विचक्रम पृथिव्या सप्तधामभिः।**[१९]

वाजसनेयसंहितायां पृथिव्याः कृते 'सप्तसंसदो अष्टमी भूमि–(भूत) साधनी'[२०] इति वचनेन सप्त संसदः इति सप्ततलानि, अष्टमी भूतसाधनी च प्राणिनां धारणी भूपृष्ठीय–भूमिः इत्यवधारणीयम्। पौराणिकवाङ्मये प्रसिद्धाः सप्तपाताला अपि वस्तुतः भूगर्भीयशैलानां स्तराण्येवेति वक्तव्यम्। हलायुधकोशे पातालमिति पदस्य व्युत्पत्तिः 'पादस्य तले वर्तते भुवनविशेषः अधोभुवनम् बलिसद्म रसातलं, नागलोकः उरगस्थानमिति' कृता–

**वडवामुखं पातालं वैरोचननिकेतनम्।**
**तथाऽधोभुवनं प्रोक्तं नागलोको रसातलम्।।**[२१]

तच्चाधोभुवनं सप्ततलत्वेन ज्ञायते–

**अतलं नितलं चैव वितलं च गभस्तिमत्।**
**तलं सुतलपाताले पातालानि तु सप्त वै।।**[२२]

अन्यत्रातलवितलनितलगभस्तिमत्महाग्र्यसुतलपाताला इति, रसातलतलातल–सुतलनितलवितलातलपाताला इति वा पाताललोका उक्ताः। एतेषां पातालानां भूगर्भत्वं कथं सिध्यते इत्यत्र वराहमिहिरादयो भूगोलकस्यान्तरिक्षे स्थितिं विज्ञाप्य पातालानां पृथिवीपुटत्वं प्रतिपादयन्ति।

**सर्वत्रैव महीगोले स्वस्थानमुपरिस्थितम्।**
**मन्यन्ते खे यतो गोलस्तस्य क्वोर्ध्वं क्व चाप्यधः।।**[२३]

इति वराहमिहिरस्य स्पष्टीकरणेन भूपृष्ठस्य सापेक्षिकोर्ध्वत्वं प्रतिपाद्यते। अन्तरिक्षे च केचिल्लोकाः अनिलाधाराः केचिच्च वसुन्धराधाराः तिष्ठन्तीत्यार्यभटस्य मतम्–

**अनिलाधाराः केचित् केचिल्लोका वसुन्धराधाराः।**[२४]

तत्र वसुन्धराधारा अधोलोकाः तमसावृताः पाताला एव, ये पृथिव्याः पुटरूपाः गर्तरूपाश्च सन्ति–

**'पुटानि पाताललोकानि स्युः'**[२५]
**'तदन्तरपुटाः सप्त'**[२६]
**'पताललोका पृथिवीपुटानि'**[२७]

इत्यादि वचनेषु पातालानां भूगर्भत्वं सिध्यते। सिद्धान्तशिरोमणौ मरीचिभाष्ये 'पाताललोका पृथिवीपुटानि' इत्यस्य भाष्ये स्पष्टमुक्तम्–

**........पृथिव्यन्तो यानि पुटानि गोलाकाराणि भूगर्भावरणानि तान्येव सप्तावान्तरभेदैः सप्तपाताललोकाः अतलवितलनितलगभस्तिमन्महीतल–सुतलपातालात्मकाः भूपृष्ठादयो भ्वन्तर्गताः गोलाकाराः सन्तीति।........।**[२८]

जैनग्रन्थेष्वपि जीवद्रव्यविवेचने चतुष्प्रकारकेषु जीवेषु नारकानाँ स्थानतया सप्तनरकाः कल्पिताः। तेषां स्थितिश्च पृथिवीभेदरूपेणैव कृता–

**नारकाः पृथिवीभेदगताः।**[२९]

चिन्तनीयतमत्र यन्नरका अन्तर्गतानां तमस्त्वाद् दुःखानुभावकत्वाद्वोक्ताः।

उक्तसप्ततलानां लोकत्वं तेषां जीवनोपयोगिनीः परिस्थितीः सङ्केतयति। 'लोक्यन्ते जीवादिपदार्थाः यत्र स लोकः।' अत ऊर्ध्वलोकवदधोलोकेष्वपि जीवनं धारयन्तः प्राणिनः सन्ति। एवं संस्कृतवाङ्मये भूगर्भस्य विवेचनं चेतनाचेतन–पदार्थानामपेक्षया प्राप्यते।

अथर्ववेदे पृथिवी हिमवत्पर्वतगिर्यरण्यैरुपशोभिता विश्वदानी विश्वरूपा ध्रुवा

अग्निवासाः असितज्ञूः कामदुधा चोक्ता यस्याः मध्ये (पृष्ठे) नाभ्यां (गर्भे) चोर्जाया असीमसम्भावनाः सन्ति–

**यत् ते मध्यं यच्च नभ्यं यास्त ऊर्जस्तन्वः सम्बभूवः।**[३०]

समस्तभुवो रासायनिकसंरचना शिलाऽश्मापांसुभिः कृता वर्तते। तस्याश्च वक्षसि (पृष्ठीयगर्भे) हिरण्यादिधातूनामाकराः सन्ति–

**शिलाभूमिरश्मापांसुः सा भूमिः संधृता धृता।**
**तस्यै हिरण्यवक्षसे पृथिव्या अकरं नमः।।**[३१]

ज्योतिर्ग्रन्थेषु पाषाणरत्नैः युक्ता भूगोलीयसंरचना मता–

**लोकस्य क्षणभङ्गुराल्पतनवे पाषाणरत्नादिभिः**
**प्राज्यायासकृतालयेष्वपि यतो दृष्टा प्रवृत्तिर्मुहुः।।**[३२]

अग्निपुराणेऽतलादीनां शैलीयसंरचनानुसारमतलस्य कृष्णा वितलस्य पीता नितलस्यारुणा गभस्तिमतः शुक्ला महाग्रयस्य शर्करावत् सुतलस्य पाषाणीया (शैलीया) पातालस्य च काञ्चनी भूमिरुक्ता–

**अतलं वितलं चैव नितलं च गभस्तिमत्।**
**महाग्र्यं सुतलं चाग्र्यं पातालं चैकमेककम्।।**
**कृष्णपीतारुणा शुक्ला शर्कराशैलकाञ्चनाः।**
**भूमयस्तेषु रम्येषु सन्ति दैत्यादयः सुखम्।।**[३३]

कूर्मपुराणे रसातलं शैलं तलातलं शार्करं सुतलं पीतं नितलमरुणं वितलं शुक्लं तलं कृष्णं महातलं च सर्वरत्नमयमित्युक्तम्–

**शैलं रसातलं विप्रा शार्करं हि तलातलम्।**
**पीतं सुतलमित्युक्तं नितलं विद्रुमप्रभम्।।**
**सितं च वितलं प्रोक्तं तलञ्चैव सितेतरम्।**
**महातलं च पातालं सर्वरत्नोपशोभितम्।।**[३४]

पञ्चास्तिकाय इत्येतस्मिन् जैनग्रन्थे नरकाणां स्वरूपं तेषां भौमिकसंरचनामेव व्यनक्ति–

**नरकगतिनाम्नो, नरकायुषश्च उदयान्नारकाः। ते रत्नशर्कराबालुकापङ्क–धूमतमोमहातमः प्रभाभूमिजभेदात् सप्तधा।**[३५]

उक्तसन्दर्भे तथ्यद्वयं विचारणीयम् प्रथमं पातालानां क्रमः, द्वितीयञ्च तेषामन्योऽन्यपृथक्त्वनिर्धारणे शैलीय–संरचनाहेतुत्वम्।

सप्तपातालेषु क्वचित्प्रथममतलमुक्तं क्वचिच्च रसातलम्। तत्रातलमगाधो निम्नगर्तः विवरं शुषिरमवट इत्युच्यते। नास्ति तलस्याधोभागस्य स्पर्शो यस्य स

अगाधोऽतिगम्भीर इति मेदिनीकोशः। हलायुधकोशे च रसातलं वडवामुखं पातालमधोभुवनं नागलोक इत्युक्तम्। रसा पृथिवीत्युच्यते। एवं पृथिव्या अधोगर्ताः अतिगभीरतम-स्थानानि भूगर्भस्याभ्यन्तराकाशं वायव्यक्षेत्रं च द्योतयन्ति। तलानां संरचनायां यो भेदो दृश्यते तस्य कारणमेतद् भवितुमर्हति यद्यस्मात् पृष्ठभागाद् येन यादृङ्निरीक्षणं कृतं तदनुसारमेव वर्णनं कृतम्। किन्तु केन्द्रीयपिण्डसंरचनाविषये प्रायः मतभेदो नास्ति यतोहि पाषाणीय-स्तरेषु स्थानभेदात् न्यूनाधिकत्वेनान्तरं सम्भाव्यते, किन्तु केन्द्रं काञ्चनं रत्नमयं चेति ज्ञेयम्।

पौराणिकवाङ्मये ज्योतिर्ग्रन्थेषु च भूगोलवर्णने भूमध्ये जाम्बूनदमयो गिरिः मेरुरिति स्मृतः, यस्य स्थितिः पृथिव्या अक्षसूत्ररूपेण कृता। स च मेरुः षोडशसहस्रयोजनानि भूप्रविष्टः ८४००० योजनानि च सच्छितः इत्युक्तः-

**मध्ये तस्य स्थितो मेरुः खखखब्ध्यष्टयोजनैः।**
**सच्छितो भूप्रविष्टोऽसौ खाभ्रोऽभ्राङ्गेन्दुयोजनैः।।**[३६]

विचारणीयं यद्भूमण्डलस्य व्यासः १६००० योजनानि अस्तीत्युक्तं षोडशसहस्रयोजनैश्च मेरुः भूप्रविष्ट इत्युक्तम्। बहिश्च दश साहस्रमस्योच्छ्राय उक्तः। पृथिव्याः मध्ये उभयत्र विनिर्गतो मेरुः जाम्बूनदमयः स्वर्णमयः अस्ति-

**अनेकरत्ननिचयो जाम्बूनदमयो गिरिः।**
**भूगोलमध्यगो मेरुरुभयत्र विनिर्गतः।।**[३७]

अथ च-

**द्वीपाब्धीनां बहिः स्वर्णभूलोकालोकपर्वतौ।**
**गर्भादस्तद् बहिः ब्रह्मकटाहक्ष्मादिभिर्वृतः।।**[३८]

उक्तवचनानुसारेणायं मेरुः भूगर्भीयकेन्द्रपिण्डमेवेति प्रतिभाति। स चाक्षांशानामाधारभूत आन्तरिकसंरचनायां मण्डलाकारः पृथिवीगोलकस्योत्तरदक्षिणयोः ध्रुवप्रदेशयोः बहिरुच्छ्रायत्वेन विनिर्गतः। रत्नमयत्वात्तस्य पिण्डस्य गुरुत्वं भवति, उभयत्र चोत्तरदक्षिणयोः सूत्रत्वात् पृथिव्याः विचक्रमणस्य कारणम् अक्षवत्वाच्च भूगोलकस्य गतिनियन्त्रको भवति। 'द्वीपाब्धीनां बहिः स्वर्णभूः लोकालोकपर्वतौ' इति ध्रुवप्रदेशयोः संरचनामेव बोधयति।

उक्तप्रकारेण शैलीयावरणभूतानां पातालानां गर्तेषु सावकाशेषु विवरेष्वप्रकाशिततमोलोकेषु रत्नादितैजसमणीनां प्रकाशः तत्रत्यानां जीवानां सञ्चरणे साधको भवति। संस्कृतवाङ्मये भूगर्भीयलोकेषु हिरण्याक्ष-प्रह्लाद-नमुचि-तारक-बलि-हयग्रीव-महाजम्भ-शङ्कु-कूर्म-मण्डूक-पिपीलिकादीनां स्थितिरपि भूविवरेषु मता। यजुर्वेदे नीलग्रीवा शितिकण्ठादयः सहस्रश्च रुद्राः 'अधः क्षमाचराः

उक्ताः।[४०] वस्तुतः भूगर्भीयप्राणिलोकः पृथग् विषयत्वेन चिन्तनीयोऽनुसन्धेयश्च।

**भूगर्भीयाः सम्पदः**

भूतसाधनी पृथिवी वनस्पतिप्रसवा रत्नगर्भा वसुधानी गौः इत्युच्यते। भारतीयपरम्परानुसारेण एतत्स्वीक्रियते यत् सृष्टेरादौ पृथिव्याः रचनाया अनन्तरं प्रथमं तत्र वनस्पत्योषधीनामुत्पत्तिरजायत तदनन्तरं प्राणिनामुत्पत्तिः एकेन्द्रियद्वीन्द्रिय–त्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियक्रमेणाभूत्। जगतः पूर्वं हिरण्यादितैजसद्रव्याणि तत्रासन्निति 'हिरण्यगर्भः समवर्तताग्रे' इत्यादिवेदवचनस्याभिप्रायो मन्तव्यः। भूमण्डले पृष्ठीयतलस्योर्वरत्वं यथा वनस्पत्योषधीनामुत्पादनदृशा महत्त्वपूर्णं भवति, तथैव भूशैलेषु नैसिर्गिकतया निक्षिप्तानि संसाधनानि मानवानां जीवनयात्रानिर्वहणायावश्यकानि भवन्ति।

भूगर्भे नानाधातुरत्नरसाः प्राकृतिकसम्पत्तयो निहिताः भवन्ति, येषां खननादिकर्मणा स्वोपयोगाय संदोहनं मानवस्य स्वभावः। एतद्दृशा धात्वादीनां स्वरूपलक्षणयोः परिज्ञानं तत्तत्तत्त्वानां सदयं संदोहनञ्च भूगर्भविज्ञानस्यार्थशास्त्रीयपक्ष इति वक्तुं शक्यते।

भूगर्भीयशैलेष्वयस्कतया प्रायः सर्वत्रैव धातवः रत्नानि च विशीर्णानि सन्ति। समस्तेऽपि भूमण्डले मृदुजलस्य बृहत्तमं स्रोतः भूगर्भीयजलागाराः सन्ति। तैत्तिरीयसंहितायां 'भूलोकस्य रूपमयस्मयमिति'[४१] उक्त्या पृथिव्याः धातुमत्ता प्रख्यापिता। अयस् इति पदस्यार्थः धातुरिति कृतः। रामायणे कुमारसम्भवे च हिमालयस्य धातुगर्भत्वम् स्वीकृतम्–

**'शैलेन्द्रो हिमवान्नाम धातूनामाकरो महान्।'**[४२]

यजुर्वेदे पृथिवी 'सुदुधा न धेनुः' इत्युक्ता अश्मामृत्तिकागिरिपर्वतसिकतादिभिः सह हिरण्यमयस् (पौलादः/इस्पात इति) श्यामं (कालायसम्) लोहं (ताम्रायसम्) सीसं त्रपु चेत्यादीनां धातूनां यज्ञेन कल्पनमभिलषितम्–

अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकता च मे हिरण्यश्च मेऽयश्च मे श्यामं च मे लोहं च मे सीसं च मे त्रपु च मे यज्ञेन कल्प्यन्ताम्।[४३]

अत्र 'यज्ञेन कल्प्यन्तामिति खननकर्मैव ज्ञेयम्। ऋग्वेदे १/५७/३, १/१६३/६, ४/२/१७, ४/१०/६, १/१२२/२ इत्यादिमन्त्रेषु स्वर्णरुप्यताम्रादिधातूनामुल्लेखोऽस्ति। खनिशाग्रन्थेषु काञ्चन–शिलाजतु– ताम्ररूप्यसीसत्रपुतीक्ष्णधातुवैकृन्तिकमणिधात्वादीनां खनिजत्वमुल्लेख्य लोहवर्गे कालायसम् (लौहम्) ताम्रवृत्तम् कांस्यम् सीसं त्रपु वैकृन्तिकमारकूटं चेति खनिजधातूनां गणना कृता।

उल्लेखनीयमस्ति यत् संस्कृतवाङ्मये वास्तुशास्त्रान्र्गतं धातुखण्डे खनिजविज्ञानस्य (Science of minerals) व्यापकविवेचनं कृतमस्ति। तदनुसारमयस्केषु

विद्यमानानां धात्वादीनां शोधन–संस्काराय द्रुतिः भस्मीकरणं सङ्करः पृथक्करणञ्चेति चतस्रः विद्याः स्मृताः। द्रुतिविद्यायाः रत्नादिसदसद्ज्ञानमित्येका कला, भस्मीकरणस्य क्षारनिपासनं क्षारपरीक्षा स्नेहनिष्कासनमिष्टिकादिभाजनमित्येताः चतस्रः कलाः, सङ्करविद्यायाः औषधिसंयोगः काचपात्रादिकरणं लोहाभिसारः मकरन्दादिकृतिः इत्याद्यनेकाः कलाः, पृथक्करणस्य च संयोगधातुज्ञानमित्येका कलाऽस्ति।[४४] वाङ्मयकोशे रत्नपरीक्षा, लोहवर्णनम्, धातुकल्पः लोहप्रदीपः भैरवतन्त्रम्, पाषाणविचार इत्येतेषां खनिशाग्रन्थानामुल्लेखोऽस्ति। एतेषामनुसन्धानं प्रकाशनमध्ययनञ्च भूगर्भीयधातु–रत्नपाषाणानां विज्ञानाय महत्त्वपूर्णं स्यात्।[४५]

धातूनां मणीनां रत्नानाञ्चोपयोग आयुर्वेदे ज्योतिष्तन्त्रे च महत्त्वपूर्णः। अर्थववेदे सीसधातोः रक्षासाधनत्वेनोपयोगस्य चर्चा विहिता–

**सीसायाध्या ह वरुणः सीसायाग्निरुपावति।**
**सीसं म इन्द्रः प्रायच्छत् तदङ्गयातुचातनम्।।**[४६]

भूगर्भे धातूनामयस्का आकरा इत्युच्यन्ते। आकीर्यन्ते धातवोऽत्र (आङ् कृ अप्) यद्वा आकुर्वन्ति सङ्घीभूय कुर्वन्ति खननादिव्यवहारमत्रेति वा (आ कृ घ) धातुरत्नादेरुत्पत्तिस्थानम् खनिः। धातूनां खनयः भूगर्भीयाकरेषु त्रिविधा भवन्ति। तदनुसारं धातवो त्रिधा उक्ताः–

क. भूमिजन्याः
ख. प्रस्तरजन्याः
ग. रसजन्याः

त्रिष्वपि रूपेषु स्थिताः धातवः तैजसाः (तेजोद्गारभूताः) विद्यन्ते।

भूगर्भीयपाषाणेषु जलं पुरीष्याग्निश्च भाण्डारीकृतौ प्राकृतिकसम्पद्रूपेण। वैदिकवाङ्मये शं नः खनित्रिमा आप इति प्रार्थना भूगर्भीयजलायैव कृता। भारतीयसामाजिकजीवने इष्टापूर्तान्तर्गतं कूपादीनां खननं धर्मो मतः। तैत्तिरीयसंहितायां बृहत्संहितायाञ्च भूगर्भीयजलस्य परिज्ञानाय विविधलक्षणानि प्रचुरतयोक्तानि।। जलशिराः तासां भूगर्भीयविस्तारश्च तत्र सविस्तरं विवेचितः।

वैदिकवाङ्मये भूगर्भे मातुर्गर्भे पुत्रमिव स्थितस्य पुरीष्याग्नेः खननस्योल्लेखोऽनेकेषु स्थलेषु प्राप्यते–

**मातेव पुत्रं पृथिवी पुरीष्यमग्निं स्वे योनावभारुखा।।**[४८]
**पृथिव्या सधस्थादग्निं पुरीष्यमङ्गिरस्त्वत्खनामि।।**[४९]
**आक्रम्य वाजिन् पृथिवीमग्निमिच्छ रुचा त्वम्।**
**भूम्या वृत्वाय नो ब्रूहि यत्तत्खनेम तं वयम्।।**[५०]

उक्तमन्त्रेषु पुरीष्याग्निर्भूगर्भीयज्वलनप्रवृत्तिवत्तैलं प्राकृतिकवायव्यपदार्थश्चेति (Oil & Natural Gases) वक्तुं शक्यते। 'वाजिन्' तद्ज्ञो वैज्ञानिक इति च वक्तुं शक्यते।

उक्तविवेचनेन स्पष्टं भवति यत् संस्कृतवाङ्मये भूगर्भीय–भौतिकसङ्घटनं, रासायनिकसंरचना, तस्य पाञ्चभौतिकत्वमन्तगर्भीयावकाशेषु च स्वतन्त्रतया जल–वाय्वग्नितत्त्वानां स्थितिरियस्केषु च भूमिप्रस्तररसजन्यानां धातूनामवस्थितिरित्यादिषु पक्षेषु व्यापको विचारः कृतः। आधुनिकभूगर्भविज्ञानस्य विषयक्षेत्रमधिकृत्य तुलनात्मकाध्ययनदृशा क्वचिदाश्चर्यजनकं साम्यं वर्तते, क्वचिच्च भेदाः सन्ति। विशेषतस्तलानां स्तरक्रमेषु संस्कृतवाङ्मयेऽपि परस्परं मतेषु वैषम्यं दृश्यते। तत्र कारणं भौगोलिक– भूगोलीय–गतिजन्यपरिवर्तनानि भवन्तीत्यस्माकं मतिः।

भूगर्भीयार्थशास्त्रक्षेत्रे संदोहनविषयकं शास्त्रीयविधानं पर्यावरणदृशा नोपेक्षितव्यम्। यतोहि भूगर्भीयपदार्थाः प्रत्यक्षतया न गृहीतुं शक्यन्ते। अस्यां दशायां संस्कृतवाङ्मयस्य तद्विषयकमनुशीलनं स्पष्टतया सुनिश्चित–भूगर्भीयज्ञानोपयोगि वर्तते, येनानावश्यकं मातुः पृथिव्या उरोविदारस्य दुष्कृत्याद्वारणं सम्भाव्यम्।

---

सन्दर्भा–

१. क. भवत्यस्यामिति भू क्विप्-पृथिवीस्थानामात्रम् हलायुधकोशः।

ख. स्थानमात्रे कथिता धरण्यामपि योषिति। मेदिनीकोशः - भान्तवर्गः-१

२. ऐतरेय ब्राह्मणम्-त्रिंशदध्यायः

३. ऐतरेयब्राह्मणम् - एकादश चतुर्दशश्चा ध्यायः

४. शतपथब्राह्मणम् - ६/१/३/१

५. महासिद्धान्तः - १६/५

६. मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति।

विभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिकाम्।।

सूर्यसिद्धान्तः - भूगोलाध्यायः (१२)/३२

७. सूर्य सिद्धान्तः- मध्यमाधिकारः /५९

८. सिद्धान्तशिरोमणिः भुवनकोशः /५२

९. बृहत्संहिता

१०. सिद्धान्तदर्पणम् भूगोलविवरणम् /४५

११. ऐतरेयोपनिषद्

१२. यजुर्वेदः ११/२३, अथर्ववेदः १२/१/१९, यजुर्वेदः ११/३, शतपथब्राह्मणयं ६/५/१/११, बृहदारण्यकोपिनिषद्- ६/४/२२

१३. ऋग्वेद : १/१४३/४

१४. ऋग्वेद : २/२२/१६४/८

१५. यजुर्वेदः १३/१४३/४

१६. वृहत्संहिता - पृ० ३९५ (भूकम्पलक्षणाध्याये काश्यपमतम् इति उद्धतम्।)

१७. अग्निपुराणम्-भुवनकोश वर्णनम् /४

१८. सूर्यसिद्धान्तः - मध्यमाधिकारः /५९

१९. ऋग्वेदः १/२२/१६

२०. वाजसनेयसंहिता : १७/१

२१. हलायुधकोशः ३/६२३

२२. शव्दरत्नावली

२३. सूर्यसिद्धान्तः - भूगोलध्याय : (१३) / ५३

२४. महासिद्धान्तः - भुवनकोशप्रश्नोत्तराध्यायः (१६)/४

२५. तदेव १६/५

२६. सूर्यसिद्धान्तः ७ भूगोलाध्यायः (१२) ३३

२७. सिद्धान्तशिरोमणिः :- गोलाध्यायः / २३

२८. तदेव मरीचिभाष्यम्- पृ० ६३

२९. पञ्चास्तिकायः /११८

३०. अथर्ववेदः ७ पृथिवीसूक्तम्

३१. तदेव

३२. सिद्धान्तदर्पणम् - भूगोलवर्णनम् / १४८

३३. अग्निपुराणम्- भुवनकोशवर्णनम् - २-३

३४. कूर्मपुराणम् - ४४/१८-१६

३५. पञ्चास्तिकायः - पृ० १८१

३६. सिद्धान्तदर्पणम् १६/१६

३७. तदेव १८/१०१

३८. तदेव १६/२२

३६. कूर्मपुराणम् ४४/२०-२५

४०. युजुर्वेदः १६/५७

४१. तैत्तिरीय संहिता ३/७/६/४

४२. रामायणम् कुमारसम्भवम्-प्रथमः सर्ग

४३. यजुर्वेदः १८/१३

४४. संस्कृत वाङ्मयकोशः

४५. तदेव

४६. अथर्ववेदः २/३/१/३

४७. संस्कृतवाङ्मयकोशः

४८. युजर्वेदः १२/६१

४६. तदेव ११/२८

५०. तदेव ११/१६



# हिमालयस्य भूगर्भः

अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः।
पूर्वापरौ तोयनिधी वगाह्य
स्थितः पृथिव्या इव मानदण्डः।।[1]

महाकवेः कालिदासस्य वचनेमेतद् हिमालयस्य सन्दर्भे कालातीतमेव प्रतिभाति। हिमालयः पाषाणीय–संरचनामात्रमिति नाऽपितु स्वक्रोडे पोष्यमाणानां विविधदेशवासिनां संरक्षकः, पादमूले स्थितानाञ्च लोकसंस्कृतीनां पोषकः, रक्षकश्चेति भूमण्डलस्योत्तरदक्षिणभागयोः मध्ये स्थितः मानदण्ड एवेति न संशयः। मानवसभ्यताया आरम्भादेव नाना–वनस्पति–रत्नौषधीनां धातूनाञ्चाकरत्वेन मानवस्य दृष्टिः हिमालयस्य समृद्धिं लक्ष्यीकृत्य तं सन्दोहनाय प्रेरितवती। शतसहस्रेभ्यः वर्षेभ्यः विविधबाह्यपरिवर्तनानि सह्यमानोऽप्यविचलः स्थितः हिमालय इदानीं मानवस्वार्थं कृतघ्नत्वञ्चाऽसोढ्वा विक्षुब्धो जायते। देवतात्मा सम्प्रति मानवस्य सौहार्दम् सहृदयत्वं सदयत्वञ्चापेक्षते। अस्यां स्थितौ हिमालयं प्रति देवभावनामङ्गीकृत्य तस्य प्रतिरक्षणार्थं तस्य यथार्थस्वरूप–ज्ञानमावश्यकम्।

एतिस्मन्क्रमे संस्कृतवाङ्मये विशेषतः शास्त्रेषूक्तस्य हिमालयस्य स्वरूपविवेचनस्याध्ययनमुपयोगि भवति। तस्य बाह्याकारं पृष्ठीय–प्राकृतिकनिधित्वञ्च शास्त्रेषु बहुशः वर्णितमस्ति। अतो विशेषतस्तस्य भूगर्भीयविवेचनं प्रस्तूयतेऽत्र।

हिमालयो विश्वस्य प्राचीनतमः पर्वतीय–प्रक्रम इति वक्तुं शक्यते। कदाऽस्याभिव्यक्तिः हिमाच्छादितपर्वतत्वेनाभवदित्यनुमातुं सृष्टिविषयकमतोपन्यासः प्रासङ्गिको वर्तते।

सृष्ट्यादौ यदा परब्रह्मणः सङ्कल्पेन शब्दगुणात्मक आंकाशः आकाशात् स्पर्शगुणात्मको वायुः वायोः रूपगुणात्मकोऽग्निः, अग्नेः रसगुणात्मिका आपः अद्भ्यश्च गन्धगुणात्मिका पृथिवी अभिव्यक्ता तदनन्तरञ्च जलरूपहिरण्याण्डात्पृथिवी उत्पन्ना, तदा सहस्राधिकैः वर्षैः विविधक्रमानवधारयन्ती पृथिवी वर्तमानावस्थामधिगता। यथा शतपथब्राह्मणे उक्तम्–

**आपःफेनः मृत् सिकता शर्करा अश्मा पृथिवी।**[2]

अर्थात् सर्वप्रथमं पृथिवी जलरूपा आसीत्। हिरण्यविस्फोटजन्य-तापादग्निगोलकमिव भासमानं तज्जलीयंपार्थिवमण्डलम् यथा-यथाऽन्तरिक्षीय-वायुमण्डलप्रभावाच्छीतमभवत्तथा-तथा प्रथमं फेनरूपमभवत् पुनः मृत्, सिकतादिक्रमेण कठोरभूपृष्ठतयाऽजायत। सर्वस्या अपि पार्थिवसंरचनायाः क्रमः अयमेव। एतैः सप्तावरणैः सप्ततलानि संरचितानि। अथ च सिकताशर्कराऽश्मादीनां विकारस्वरूपाणि नाना-रत्नपाषाण-धात्वादीनि पृथिवीपृष्ठे पृथिवीगर्भे च संसृष्टानि। भूपटले प्रथमं वनस्पत्योषधीनां सृष्टिरजायत। ततो जीवमण्डलमुदपादि। किन्तु निरन्तरं गतिमती भूगोलकस्वरूपा पृथिवी अद्यापि स्वगर्भे आप इत्यादीनि भूतान्याग्नेयप्रवाहरूपेण दधाति। एतस्मादेव साऽग्निगर्भा[3] रत्नगर्भा वसुन्धरा इत्यादि पदैरभिहिता। पृष्ठभागे सर्वत्र समुद्रपर्वतद्वीपान् धारयन्ती अन्तःस्थिते जलमण्डले जायमाने गतिजविक्षोभे निरन्तरं परिवर्तनशीला विद्यते –

**वारुणस्योपरि पृथिवी सशैलवनकानना।**
**स्थिता जलजसत्वाश्च संक्षोभाच्चालयन्ति गाम्।।**[4]

अन्तःविक्षोभैरूष्मावृद्धिरन्तस्थपदार्थान् विशेषत आग्नेयप्रवाहं यदा बहिः नोदयति तदा आघातजैः संपीडनैः भूरन्ध्रेभ्यश्च सोऽग्निरुच्छ्रायतया ससैकतशर्करः पर्वतीयसंरचनां जनयति। शनैः शनैः शीतीभूय तस्य बाह्यावरणं पाषाणीयसंरचनावद्भवति किन्त्वभ्यन्तरं पृथिवीगर्भवदेवोष्णं भवति। एवं पर्वतीयसरंचनापि पृथिवी पटलवदेव भवति। पृथिवीजन्यत्वात्त उच्छ्रायाः पार्थिवाः पर्ववत्वाच्च पर्वता इत्युच्यन्ते। पृथिव्याः पटलीयावरणवदेव पर्वता अपि रसधातुपाषाणरत्नादिसम्पदं गर्भे दधानाः प्रकृतिसमृद्धाः भवन्ति।

हिमालयस्य संरचनाऽपि कदाचित्तादृशी एवास्ति यस्यां कालप्रवाहेण परिवर्तनानि जायन्ते। पूर्वः यत्रोच्छ्राय आसीत्तत्रेदानीं निवतानि दृश्यन्ते। यत्र च निवतानि सरोवरादयश्चासन् तत्रेदानीं पर्वतशिखराणि जातानि। यद्यप्येतानि परिवर्तनानि सहस्त्र-सहसवर्षाणां कालान्तरालमपेक्षन्ते तथापि पृष्ठीयभूगर्भीय-सङ्घटकदृशा महत्त्वपूर्णानि भवन्ति।

अस्तु। हिमालयः कश्चिदेकः पर्वतो नास्त्यपितु पर्वतानां समुच्चय इति वक्तुं शक्यते। एतस्मादेव ऋग्वेदे हिमालयस्य कृते बहुवचनान्तं हिमवन्त इति पदं प्रयुक्तं वर्तते। अत्युच्चशिखरेष्वातपकालेऽपि हिमसन्द्रायो न जायते। वर्षपर्यन्तं हिमाच्छादितत्वाद्यथार्थो हिमालय आकारतया सम्पत्तया च शैलेन्द्र इत्युच्यते। पूर्वतः पश्चिम-समुद्रपर्यन्तं विस्तीर्णः उत्तरदक्षिणयोर्मेर्वोर्मध्ये मानदण्ड इव स्थितः मध्यमेरुरिति

ख्यातो हिमालयः दिव्यत्वाद्देवतात्मा इति मन्यते। सिन्धुसभ्यतात आरभ्याद्यपर्यन्तं लोकानां बहुविध आश्रयो हिमालयो मनीषिणां चिन्तनाधारः साधनास्थलमध्ययनस्य विषयश्च सन् तिष्ठति।

ब्रह्माण्डस्य प्रतितत्त्वं प्रतिपदार्थञ्च सूक्ष्मनिरीक्षणदृशा कृतान्वीक्षणाः भारतीय–ऋषयो दार्शनिकाः चिन्तकाश्च हिमालयस्य विवेचनं व्यापकतया कृतवन्तः सन्ति। तदनुसारं हिमालयस्योत्पत्तिः संरचना, विस्तारः, वनस्पतिः जैवमण्डलं तत्रत्यानां निवासिनां जीवनपद्धतिः संस्कृतिः हिमालयस्य भूगर्भीयसम्पद् जलस्रोतः इत्यादिविषयाणामन्योऽन्यसम्बद्धघटकरूपेण विवेचनं संस्कृतग्रन्थेषु प्राप्यते। विवेचनमेतन्न केवलं तथ्यपूर्णम् रोचकञ्चास्त्यपितु प्राकृतिकनिधीनां संरक्षणदृशा नूनमुपयोगीति कृत्वाऽगाधसंस्कृतवाङ्मयभाण्डारात् यावच्छक्यमत्यल्पोल्लेखानाहत्य हिमालयस्य भूगर्भीयविवेचनमत्र कर्तुमिष्यते। सौविध्यायाधोनिर्दिष्टबिन्दुविभागेन समायोजनं कर्तुं शक्यते।

१. हिमालयस्य क्षेत्रं विस्तारः भूगर्भीयसंरचना च।
२. हिमालयस्य भूपृष्ठीयगर्भः
३. हिमालयस्य भूगर्भीयसम्पद्
४. हिमालयस्य भूगर्भीयविक्षोभाः
५. हिमालयस्य भूगर्भीयसंरक्षणम्

**१. हिमालयस्य क्षेत्रं विस्तारः भूगर्भीयसंरचना च**

हिमालयस्य प्रथमत उल्लेखः ऋग्वैदिकसंहितासु हिमवदिति नाम्ना प्राप्यते। क्वचिद् 'बृहन्तो अद्रयो' इत्युक्त्वाऽस्यैव विशालपर्वतरूपेणोल्लेखः कृतोऽन्यत्र पूर्वपश्चिमयोः समुद्रयोः (अर्वावर्तपारावतयोः) सरस्वतीनद्या सम्बद्धस्य दक्षिणसमुद्रस्य सीमापर्यन्तं हिमवन्त इति पर्वतानामुल्लेखः प्राप्यते –

**यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः।**[५]

व्योमपर्यन्तमुच्छ्रिताः ज्येष्ठाः पर्वताः हिमवन्त एव। यथोक्तम्–

**'ज्येष्ठासो न पर्वतासो व्योमनि'।**[६]

एतेषां रचना आतियैःशैलैः जाता येभ्यः शान्तिप्रार्थना वैदिकर्षिभिः कृताऽसीत्–

**शं नो अग्निर्ज्योतिरनीको............।**[७]

आग्नेयेभ्य उत्प्रवाहेभ्यः पर्वताः कुपिताः भवन्ति, पृथिवी च विक्षुब्धा भवति–

**यः पृथिवीं व्यथमानामदृंहद्य पर्वतान् प्रकुपितामरम्णाम्।।**[८]

इत्यादिमन्त्रे बृहत्पर्वतीयभूकम्पानामुल्लेखः हिमालयस्य सन्दर्भ एव प्रतीयते। ऋग्वेदे (१०/१२१/४) हिमालयस्य कृतेऽथर्ववेदे (१२/१/११) च सर्वेषां पर्वतानां

कृते हिमवन्त इति पदस्य प्रयोगः कृतः। एवं प्रतीयते यत्तस्मिन् काले वर्तमानकालतोऽधिकं हिमालयस्य विस्तारो भवेत्। तैत्तिरीयसंहितायां (५/५/११/१) बाजसनेयसंहितायाञ्च (२४/२, २५/१२) हिमालयार्थे हिमवन्त इति शब्दः प्रयुक्तः। शतपथब्राह्मणे (१/८/१/६) उत्तरगिरिरिति शब्दो हिमालयस्य कृत उल्लिखितः। पुराणेषु हिमालय इति शब्दः प्रयुक्तः। अथ च प्रायः सर्वेष्वेव पुराणेषु हिमालयस्य व्यापकं वर्णनं कृतमस्ति। मत्स्यपुराणे पद्मपुराणे च नेकेष्वध्यायेषु हिमालयपर्वतमालानां तत्रत्यानां देशानां तत्संस्कृतेश्चोल्लेखः सविस्तरं कृतो वर्तते।

'हिमवतां विस्तारः ऋग्वेदे उत्तरपश्चिमसीमान्तप्रदेशाद् गोमतीनद्याः (वर्तमानगोमल इत्याख्यायाः) मुखपर्यन्तमुक्तः।

**एष क्षेति रथवीति मघवा गोमतीमनु।**

**पर्वतेष्वपश्रितः।**[६]

दक्षिणपूर्वदिशि सिन्धुनद्या उद्गमक्षेत्रादुत्तरपूर्वदिशि विस्तृतेयं बृहत्पर्वतमाला। यथोक्तम् –

**बृहतः पर्वतानधि.....।**[१०]

हिमवतामुत्तुङ्गपर्वतमालाः निरन्तरं हिमाच्छादनेन शीतलवायु-वत्योऽलङ्घ्याश्चासन्। पूर्वोत्तरभागेऽजस्रवर्षयोच्चावचेषु सत्सु वर्षाघातैरपक्षिताः (अपश्रिताः) पर्वतश्रेण्यो भिद्यन्ते–

**दृतिं सुकर्ण विसितं न्यच्च समामवन्तूद्वतो निपादाः।।**[११]

**भिनद्गिरिं शवसा वज्रमिष्ठान्।**[१२]

एवं वैदिकसंहितासु बृहत्पर्वतरूपेण महाहिमालय एव वर्णितो यस्य निपादा अल्पोन्नततराः पर्वतश्रेण्य उक्ताः।

पुराणसाहित्ये हिमालयस्य विस्तृतोल्लेखः प्राप्यते। तस्मिन् प्रसङ्गे मेरुपर्वतं केन्द्रीकृत्योत्तरमेरुः दक्षिणमेरुरित्येतयोर्मध्ये मेरुसुमेरुपर्वतयोः चतुर्दिक्षु विस्तीर्णाः पर्वतश्रेण्यश्च वर्णिताः। मेरोः समन्ततो यस्य पर्वतीयक्षेत्रस्य विस्तारो वर्णितस्तदनुसारं मेरुः महाहिमालय इति वक्तुं शक्यते। ततः पूर्वस्यां दिशि श्वेतः दक्षिणतः पीतः पश्चिमतः श्याम उत्तरतश्च रक्तः पर्वतो विद्यते। हिमालयस्यान्तर्वर्तिक्षेत्राणां पृष्ठीयभूसंरचनादृशा एष उल्लेखो महत्वपूर्णः प्रतीयते। खनिशास्त्रस्य दृशाऽपि भूमेः वर्णस्य महत्त्वमन्यूनं वर्तते। बृहत्संहितायां सारस्वते च भूवर्णानुसारं भूगर्भीयजलभाण्डारस्य गाम्भीर्यं परिमाणज्ञानञ्चोक्तम्। चरकसंहितायाञ्च जलस्य रसायनानां च गुणनिर्णयस्य कश्चिदाधारः भूवर्णोऽपि मतः। मत्स्यपुराणे मेरुपर्वतस्योत्तरस्मिन् भागे सुपार्श्वः नीलः श्वेतः श्रृङ्गवान् चेति, पूर्वस्याम् दिशि

मन्दरः जठरः देवकूटश्चेति, दक्षिणतः गन्धमादनः निषधः हेमकूटः हिमवाञ्चेति पश्चिमतश्च विपुलः माल्यवान् गन्धमादनश्चेति पर्वतश्रृङ्खलानामुल्लेखः प्राप्यते।[१३] हिमवान् लघुहिमालयः प्रतीयते यः पूर्वतः पश्चिमपर्यन्तं प्रसृतानां पर्वतश्रृङ्खलानां समानान्तरं किञ्चिदल्पोच्छ्रिताः हिमालयप्रदेशा इति वक्तुं शक्यते। वर्तमानकाले शिवालिकपर्वतश्रृङ्खलारूपेण प्रख्याता इमा पर्वतमालाः। पुराणविमर्शकारः मेरुपर्वतस्याभिज्ञानमेतादृक्पर्वतरूपेण करोति यतः सर्वासु दिक्षु पर्वतश्रेण्यः उद्गताः सन्ति।[१४]

मत्स्यपुराणे मेरुपर्वतस्य विस्तारः सहस्रयोजनान्युच्छ्रयश्च चतुरदशीतियोजनानि भूप्रविष्टभागः षोडशयोजनानि विस्तारश्चाष्टाविंशतिरुक्तः–

**योजनानां सहस्राणि चतुराशीतिसूच्छ्रितः।**
**प्रविष्टः षोडशाधस्तादष्टाविंशतिविस्तृतः।।**[१५]

एवं क्षेत्रफलं ८४००० योजनं, तदनुसारं ६७२०० किलोमीटराणीति वक्तुं शक्यते।

आधुनिकभूगोलविदः २५०० किलोमीटराणि, २४०तः ३२०किलोमीटराणि यावद् विस्तृतः ५०००००० किलोमीटराणि क्षेत्रफलविस्तारात्मकः हिमालयः सिन्धुनदीतः ब्रह्मपुत्रपर्यन्तं वक्राकारतया विस्तीर्ण इति मन्यते, यस्मिन् कृतवसतयः प्रदेशाः जम्मूकश्मीरो हिमाचलप्रदेशोऽरुणाचलप्रदेश उत्तराञ्चलादयः देशाश्च नयपाल–सिक्किमपूर्वबङ्गालभूटानेत्यादयश्चेति वर्तन्ते। उत्तरतो दक्षिणदिशि म्यामार (बर्मा) इति देशतः नागालैण्डमणिपुरमिजोरमपर्यन्तमस्य विस्तारो मन्यते।[१६] यद्येकयोजनस्य मानं ५ किलोमीटराणि स्वीक्रियते तर्हि पौराणिकमानानुसारं हिमालयस्य क्षेत्रफलं ७००००० किलोमीटराणि विस्तारश्च १४० तः १६० किलोमीटराणि यावन्निश्चेतुं शक्यते। एवं पौराणिककालापेक्षयेदानीं हिमालयस्य समग्रक्षेत्रफलं न्यूनतरं विस्तारश्च वृद्धतरो जातः। सम्पूर्णक्षेत्रफले न्यूनातायाः बहूनि कारणानि भवितुमर्हति येषां चर्चाया अत्र प्रसङ्गो नास्ति।

पूर्वतः पश्चिमपर्यन्तं हिमवतो विस्तारोऽशीतियोजनानि (४०० किलोमीटराणि) धनुषः प्रत्यञ्चेव वक्रो वर्तते–

**अशीतिर्हिमावाञ्छैलः आयतः पूर्वपश्चिमे।**[१७]
**दक्षिणापरतो ह्यस्य पूर्वेण च महोदधिः।**
**हिम्नानुत्तरेणास्य कार्मुकस्य यथा गुणः।।**[१८]

हिमालयस्य मध्यक्षेत्रे कैलासः मानसरोवरस्य क्षेत्रत्वेन राजते। कैलासस्य पूर्वोत्तरस्मिन् भागे सुवेलः दक्षिणपूर्वस्मिन् भागे हेमश्रृंङ्गः पश्चिमोत्तरस्मिन् ककुद्मान् पश्चिमे च वरुणपर्वतमालाः सन्ति। कैलासः स्फटिकमणेः क्षेत्रं वर्तते। अस्य शब्दस्य

व्युत्पत्तिरेव **केलाविलासः सीदत्यस्मिन्निति केलासाः स्फटिकाः ताः सन्त्यस्मिन्निति वा कैलास इति वर्तते।**

हिमालयस्य भूप्रविष्टः षोडशयोजनात्मको भागोऽस्याचलत्वस्य प्रमाणमस्ति। महाकविः कालिदासोऽलङ्कारमुखेन कुमारसम्भवाख्ये महाकाव्ये तथ्यमेतत्प्रतिपादयति।

ब्रह्मपुराणे हिमालयस्य भूसंरचना सप्तवर्णात्मिकोक्ता—

**'कृष्णा शुक्लारुणा पीता शर्करा शैलकाञ्चनी।'**[२०]

कालिदासो हिमालयं प्रकृत्या शिलोरस्क इत्युक्त्वा तस्य प्रान्ते स्थितान् प्रदेशान् पीतासितरक्तसितधातुरजोमयान् वर्णयति—

**प्रकृत्यैव शिलोरस्कः सुव्यक्तो हिमवानिति।**[२१]
**पीतासिता रक्तसितैः सुराचल—**
**प्रान्तस्थितैर्धातुरजोभिरम्बरम्।**[२२]

शिलोरस्कः इत्यस्याभिप्रायोऽयमेव यद्धिमालयस्य भूपृष्ठः शैलीयपाषाणैः रचितोऽस्ति। गन्धमादनक्षेत्रमनु सुमेरोः समन्ततः पृष्ठीयसंरचना पीतश्यामरक्तश्वेतपाषाणैः गैरिकादिभिः धातुभिश्च सङ्घटितास्ति।

एवं हिमालयः संस्कृतवाङ्मये पर्वतश्रृङ्खलानां समुच्चय उक्तः। सर्वेषां द्वीपानां मध्ये स्थितस्य जम्बूद्वीपस्य (वर्तमान एशियाद्वीपस्य) मध्ये कनकपर्वतः मेरुरसौ बृहद्हिमालय एव।

यद्यपि हिमालयस्य विस्तारस्य मानं विविधेषु पुराणेषु ज्योतिर्ग्रन्थेषु च पर्याप्तं भिन्नतयोक्तम्। चतुराशीतिसहस्रयोजनात्मके माने क्वचित्प्रमाणं न लभ्यते तथाप्युच्छ्रायश्चेत् समग्रक्षेत्रफलानुसारं गणयेत् तर्हि किञ्चत्सादृश्यं दृश्यते पौराणिकाधुनिकमतयोः। अथ च वर्तमानहिमालयस्य शिवालिकक्षेत्रे कदाचिद् बृहद्गर्तो—ऽभवदेतदनुमीयते। तस्मिंश्च गर्ते बहुकालं यावत्कश्चित्सागरः स्थित आसीदित्यनुमीयते। पौराणिकसाहित्ये अथ च हिमालये नैकेषां सागरोपमानां सरोवराणामुल्लेखः कृतोऽस्ति। भौमिकपरिवर्तनदृशा तेषां तुलनात्मकमध्ययनमपेक्ष्यते।

## हिमालयस्य भूपृष्ठीयः गर्भः

पृथिव्या उपरि हिमालयस्योच्छ्रायः पृथिवीगर्भवदेव भूगर्भीयसंरचनां बिभर्ति। हिमालयस्य भूप्रविष्टः भागः रसातलेन सम्बद्धः सन् बृहत्क्षेत्रपर्यन्तं विस्तृतोऽस्ति यस्य पाषाणीयसंरचना वैविध्यपूर्णास्ति। आधुनिका अनुसन्धातारोऽपि हिमालयं विश्वस्य जटिलतमभूसरंचनात्मकसङ्घटकतया स्वीकुर्वन्ति। हिमालयीयभूपटले क्वचिदवसादिशैलाः सन्ति, क्वचिन्मृदुशैलानां क्वचित् स्फाटिकशैलानां च बाहुल्यं

वर्तते क्वचिद्वा धातुरागमयी भूमिः विद्यते। शैलानां संयोजनेन तन्मध्ये निर्मितानि विशालानि विवराणि दुर्गमाण्यपि पृथुलानि सन्ति। तेषु च विशालतराणि समृद्धिशालीनि वैभवशालीनि च नगराण्यवस्थितानि सन्ति। तत्र सूर्यस्य प्रकाशः न प्राप्नोति तथापि तत्रत्यानां रत्नानां प्रकाशेन तेजसा च प्रकाश ऊर्जा च प्राप्येते लोकैः। बहव्य एतादृश्यः गुहाः गह्वराश्च सन्ति येषां द्वाराणि क्षुद्राणि सन्ति, किन्त्वभ्यन्तरे विशाला अवकाशाः सन्ति, येषु स्फाटिकशैलानां रत्नानाञ्च कान्तिरहर्निशं तानि सावकाशानि गह्वराणि प्रकाशयति। दुर्गमाः निपादाः स्फाटाः पर्वततलानि च हिमालयस्य भूगर्भस्याङ्गानीति वक्तुं शक्यते, यत्र सहस्राधिकाः वनस्पतयः रत्नपाषाणाः धातुरागा अयस्काः जलस्रोतस्त्वेन विद्यमानाः सरोवराश्च राजन्ते।

पातालीयजलस्य महाशिरा हिमवत्पादनिःसृतानां नदीनामजस्रप्रवाहाय जलं प्रयच्छति, येन नद्यः समस्तमपि भूभागं परित आप्लावयन्त्यः समुद्रमभि सरन्ति। दुर्गमगह्वरेषु हिमसन्द्रावशात्प्राप्तं वर्षास्यन्दितञ्च जलं सञ्चितं भवति यदोषधिसंसर्गेण स्वास्थ्यकरं निर्मलं च भवति। रत्नादीनां संसर्गप्रभावात्क्वचिदुष्णं क्वचिच्छीतलं क्वचिद्गन्धकयुक्तं क्वचिदन्यतरगुणान्वितं जलं प्राप्यते। एवमेवासङ्ख्याः पुष्करिण्यः ह्रदाः नदाश्च विस्तारेण सागरोपमाः सन्ति।

यथा पूर्वमुल्लेखः कृतो यद् हिमालयस्य भूगर्भे आग्नेयशैलाः तेजोद्गारतया विद्यन्ते तेषां स्फोटेन काले–काले नूतना उच्छ्रायाः निर्मीयन्ते। तेषु च शैलेषु तेजोद्गारतया स्थिताः पाषाणाः कठोरीभूय मणित्वं प्राप्नुवन्ति। तदनुसारं नीलपर्वतस्यायस्केषु वैदूर्यमणयः, श्वेतपर्वते स्वर्णशैलाः, श्रृङ्गवति पर्वते च स्वर्णरजतमयाः शैलाः सन्ति। अत्रैव जम्बूनदो विद्यते, यः स्वर्णस्य विशाल आकरोऽस्ति। तदधिकृत्यैव मेरुः जाम्बूनदमयो गिरिरित्युच्यते।[२३] तत्रत्यं सुवर्णं जम्बूनद्याः जले मिलित्वा तदपि सौवर्णजम्बूवर्णीयं करोति।

एवं रत्नपाषाणानां बाहुल्याद् हिमालयस्योपरितनीयं शैलावरणं कठोरमस्ति। अन्तःस्थजलस्रोतस्त्वाच्छन्नजलस्य भूमिगतत्वाच्च कठोरशैलानामधः मृदुशैलाः वर्तन्ते। शैलानामयं स्वभावः प्राकृतिककारणैरेव वर्तते। कालिदासः काव्यप्रतिभावशाद् जडमपि हिमालयं चेतनं मन्यमानः तस्य स्थावररूपस्य वर्णनमुक्तस्वभावतयैव करोति–

**काठिन्यं स्थावरे काये भवता सर्वमर्पितम्।**
**इदं तु ते भक्तिनम्रं सततमाराधनं वपुः।।**[२४]

भक्तिनम्रं वपुः इत्येतस्मादेवोक्तं यत्पाषाणीयभक्तिषु (रन्ध्रेषु) प्रविष्टं जलं तदन्तर्वर्तिशैलान्नम्रान् मृदूंश्च करोति।

कुमारसम्भवे भूस्खलनस्य कारणमपि प्रकारान्तरेणोक्तमस्ति। यदा गुरुतराः शिलाः भूगर्भीयावकाशवत्त्वात्स्खलन्ति तर्हि कम्पमाना पृथिवी नमते। भौगोलिकदृशेयमवस्था भूस्खलनमित्युच्यते। एनामवस्थां कविरेवमुत्प्रेक्षते यत्स्वभावेन गम्भीरः वपुषा च गुरू हिमालयः गुरुभिः पादन्यासैर्वसुन्धरां नमयति–

**नमयन्सारगुरुभिः पादन्यासैर्वसुन्धराम्।**[२५]

पद्मपुराणे हिमालयस्य कैलासक्षेत्रे पूर्वोत्तरदिशि सुवेलपर्वतस्य भूमिः चन्द्रप्रभा (स्फाटिकशैलीया) दक्षिणपूर्वदिशि हेमश्रृङ्गः लोहितपर्वतो वा मनःशिलामयः (रक्तवर्णपाषाणीयः) स्वर्णक्षेत्रमिति पश्चिमोत्तरे ककुद्मानोषधिमयः सर्वधातुमयः वैद्युतपर्वतश्चेति पश्चिमे च सुवर्णशैलीया वरुणपर्वतस्य भूमिः विद्यते।[२६] कैलासशिखरः श्वेतस्फाटिकशिलामयः सदैव हिमाच्छादितः प्रदेशोऽस्ति–

**शिलाभिः स्फाटिकस्यापि शुक्लाभिस्तु सुशोभनः।**[२७]

## हिमालयस्य भूगर्भीयजलस्रोतः

नदीनामुद्गमत्वेन पर्वतानां प्रसिद्धिः सृष्टेरादितोऽवगम्यते। हिमालयः विश्वस्य विशालतमेषु पर्वतीयसङ्घटकेष्वन्यतमः। अपितु प्राकृतिकसंसाधनदृशा हिमालयः समृद्धतमश्चेदुच्यतां तर्हि नातिशयोक्तिः मन्तव्या। आसमन्तात् सहस्रशो निर्झर–प्रस्रवण–सरोवरनदीनदादिकानां प्रभवस्थलत्वेन ख्यातो हिमालयः सीमावर्तिदेशेषु समुद्रपर्यन्तं च लोकेभ्योऽपेक्षितजलवितरणेन निरन्तरमुपकाराय प्रवर्तते। हिमालयस्य मूलभूतायाः मुख्यजलशिरायाः निरन्तरप्रवाहरूपेण जलं गृहीत्वा नद्यः भूभागेषु प्रापयन्ति। अथ च आवर्षं हिमपातेनाच्छादितेषु शिखरेष्ववसादैः भूरन्ध्रैश्च गह्वरस्थेषु विशालतरेषु सरोवरेषु जलं सञ्चीयते। तच्च कदापि क्षयं नैति। एते सरोवराः नैकासां नदीनामुद्गमत्वेन ख्याताः सन्ति। मानसरः बिन्दुसर इत्यादयः हिमालयस्य भूगर्भीयजलस्रोतसः भाण्डारतया स्थिताः सन्ति। हिमसन्द्रावकाले औषधीयवनस्पतियुक्तं हैमजलं विवरेषु स्थिते जले तत्तद्गुणवत्तामुत्पादयति। एतदेव कारणमस्ति, यद् गङ्गादिनदीजलं स्वास्थ्यकरं गुणकरं सदानिर्मलञ्च तिष्ठति। न चैतज्जलं विरसतां याति।

वैदिकग्रन्थेषु पुराणेषु चरकसंहितायां बृहत्संहितायाम् विविधपर्वतेभ्य उद्गतानां नदीनां विविधवर्णगन्धगुणादीनामुल्लेखः प्राप्यते। मत्स्यपुराणे हिमालयस्य पार्श्वभागादुद्गतासु नदीषु प्रमुखायाः गङ्गासिन्धुसरस्वतीशतद्रुचन्द्रभागा–यमुनाशरय्वेरावतीवितस्ताविशालादेवकीकुहूगोमतीधौतपापाबाहुदादृषद्वती कौशिकीतृतीयानिश्चलागण्डकीक्षुलोहितानां गणना कृताऽस्ति–

**.... पिबन्ति बहुला नद्यो गङ्गासिन्धुः सरस्वती।।**
**शतद्रुश्चन्द्रभागा च यमुना शरयूस्तथा।**
**ऐरावती वितस्ता च विशाला देविका कुहूः।।**
**गोमती धौतपापा च बाहुदा च दृषद्वती।**
**कौशिकी च तृतीया च निश्चला गण्डकी तथा।।**
**इक्षुलोहितमित्येता हिमवत्पादनिःसृताः ।।**[२८]

चरेकण हिमालयपादान्निसृतानां नदीनां जलस्य विमलत्वं पथ्यत्वं पुण्यत्वञ्च ख्यापितम्। तासां नदीनां जल उक्तगुणाः पाषाणविच्छिन्नत्वाद् विक्षोभवत्त्वाच्च निरन्तरं शोधनप्रक्रियापन्नाः भवन्ति।

**नद्यः पाषाणविच्छिन्ना विक्षुब्धविमलोदकाः।**
**हिमवत्प्रभवाः पथ्याः पुण्याः देवर्षिसेविताः।।**[२९]

एवमेव कैलासपर्वतक्षेत्रे कस्यचिद्विशालविवरस्योल्लेखः प्राप्यते, यस्मिन्नत्रिमुनेराश्रम आसीत्। तत्समक्षञ्च विशालसरोवर उल्लेखितः यस्मिन् पद्मरागः वैदूर्यम्, वज्रमणिः, मरकतमणिः स्वर्णम् महानीलं पुष्परागमणिः कर्कोटकमणिः, तुत्थकमणिः शेषमणिः राजावर्तमणिः ज्योतीरसः स्यमन्तकमणिः सुरमणिः वलक्षमणिः सर्पमणिः स्फटिकमणिरित्येतेषां मणीनां शिला आसन्। तस्मिंश्च गोमेदपित्तकधूलीमरकत सौगन्धिकराजमणिब्रह्ममणिमुक्तादीन्यनर्घरत्नान्यासन्। तन्मध्ये २०० धनुष्परिमाणात्मिका वैदूर्यमयी शिला आसीत्।[३०] काचित् चतुरस्राकारा पुष्करिणी तत्रैवासीद्यस्याः जलं स्वादुशीतं लघु सुगन्धितञ्चासीत्।[३१] हिमालयस्य दरीमुखेभ्योऽसङ्ख्याकाः निर्झराः निर्गता आसन् येषामजस्रप्रवाहेण भूगर्भीयजलस्रोतसां ज्ञानं भवति।[३२] इदानीमपि हिमालयक्षेत्रे सहस्रशो धाराः प्रस्फुटिताः न केवलं जलापूर्तेः साधनत्वेन राजन्तेऽपितु पर्यटकानां मनोविनोदकेन्द्राण्यपि तत्र व्यवस्थापितानि। देहरादूनक्षेत्रे सहस्रधारा इति स्थानं निर्मलजलस्य प्रपात इति प्रसिद्धः। मूसरीनगरे च प्रसिद्धं 'कैम्प्टीफाल' इत्याधुनिकनाम्ना प्रसिद्धस्य प्रस्रवणस्य उद्गमः कस्मिंश्चिन्निगूढे पर्वतविवरे भवेदधस्तनीये तलभागे च प्रवहत्तस्य जलं विवरेभ्य एव सङ्घट्टेन विमलीभवत् विविधक्षेत्रेषु गच्छति।

## हिमालयस्य भूगर्भीया सम्पदः

**शैलेन्द्रो हिमवान्नाम धातूनामाकरो महान्।**[३३]

महर्षिवाल्मीकेः उक्तवचनं हिमालयस्य समग्रभूगर्भीयसम्पदोऽप्रतिमवैभवं प्रतिपादयति। अनया दृशा निश्चयेनैव हिमालयः शैलेन्द्रः (शिलाभवानां शैलानामिन्द्रः) इति वक्तुं शक्यते। आकरः भूगर्भीयधात्वादीनां भाण्डाराः सन्ति, यत्रायस्केषु धातवो

विद्यन्ते। आकर इति शब्दस्य निर्वचनम् उपसर्गपूर्वकआकृ धातोरप्प्रत्यययोगात् खनिः इत्यर्थे, 'घ' प्रत्यययोगाच्च धात्वादेरुत्पत्तिस्थानस्यार्थे कृतः।

**आकीर्यन्ते धातवोऽत्र यद्वा आकुर्वन्ति सङ्घीभूय कुर्वन्ति खननादि–व्यवहारमत्रेति वा (आ कृ घ) धातुरत्नादेरुत्पत्तिस्थानं खनिः।**[३४]

हिमालयस्याशेषक्षेत्रे आकराः विद्यन्ते। तेषां तत्र स्थितित्वाद्वनस्पत्यादीनां प्राचुर्याच्च स्वर्गवद्वैभवयुक्ताः हिमवत्प्रदेशाः वर्तन्ते। 'अनन्तरत्नप्रभवस्य' हिमालयस्य 'धातुरागाः' न केवलं तत्रत्यानां प्राकृतिकपदार्थानां गुणवत्त्वं वर्धयन्त्यपितु तत्रत्यं जलवायुं जीवान् मानवांश्चापि दिव्यत्त्वं प्रापयति।

संस्कृतसाहित्ये पदे–पदे हिमालयस्य रत्नवैभवो वर्णितः। तत्र केषाञ्चिदुल्लेखोऽत्र विधीयते। वैदिकसंहितासु सामान्यतः एते पर्वताः चित्रभा[३५] इत्युक्ताः। तेषु च पर्वतेषु वसुसन्निधान[३६] गह्वरेषु च पाषाणजाः धातवः संस्थिता इति सङ्केतः ऋग्वेद एव प्राप्यते–

**परिवीतमश्मन्यनन्ते अन्तरश्मनि।**[३७]

उत्तरहिमवतः पर्वतीयभूगर्भेऽनेकरत्नानामुल्लेखः प्राप्यते–

**धत्तं रत्नानि जरतं च सूरीन्।**[३८]

पौराणिकवाङ्मये हिमालयः सर्वधातुरत्नानामाकरत्वेन स्मृतः। स्वर्ण–मनःशिला–स्फटिक–वैदूर्य–वज्रमणि –नीलमणि–मरकत–चन्द्रकान्तमणि–सूर्यकान्तमणीत्यादीनि प्रमुखानि धातुरत्नानि सन्ति।[३९] पद्मपुराणे दिव्यमणिसमन्वितः हिरण्यश्रृङ्ग उल्लखितः। नाम्नैव तत्क्षेत्रस्य हिरण्यबहुलत्वं बोध्यते। कालिदासेन मेघदूतेऽलकापुरीरामगिर्योः मध्ये मन्दाकिनीनद्यास्तटे बालुकाप्रदेशे स्वर्णसिकताः मणयश्चोल्लिखिताः–

**अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः**
**सङ्क्रीडन्ते मणिभिरमरप्रार्थिताः यत्र कन्याः।।**[४०]

एवं ज्ञायते, यत् क्षेत्रेऽस्मिन् कनकसिकतासु निक्षेपतया गूढा मणयः प्राप्यन्ते। अत्यलकं हिमालयस्य राजधानी औषधिप्रस्थेत्याख्या विराजते, यत्र गङ्गास्रोतः परिच्छिनं प्रकाशितरत्नौषधिभिः बृहन्मणिशिलाभिश्च समवेतं विशालक्षेत्रं विद्यते। तत्स्थानं गह्वरगतमतः गुप्तमित्युक्तं रत्नादिमत्त्वाच्च मनोहरमित्युक्तम्–

**अलकामतिवाह्येव वसन्ति वसुसम्पदाम्।**
**स्वार्गाभिस्यन्दवमनं कृत्वेवोपनिवेशनम्।।**
**गङ्गास्रोतः परिक्षिप्तं वप्रान्तर्ज्वलितौषधिम्।**
**बृहन्मणिशिलासालं गुप्तावपि मनोहरम्।।**[४१]

गैरिकादिधातूनां शैलाः हिमालये प्राचुर्येणोपलभ्यन्ते।[४२] निषधस्योत्तरस्मिन् नीलस्य च दक्षिणतः हिरण्यवर्षे श्रृङ्गत्रयस्य चर्चा पुराणेषु प्राप्यते। तत्रैकः श्रृङ्गः मणिमयोऽपरो रजतमयोऽन्यश्च सर्वरत्नमय इति–

**एकं मणिमयं तत्र तथैकं रौप्यमद्भुतम्।**
**सर्वरत्नमयञ्चैकं भवनैरुपशोभितम्।।**[४३]

अर्थशास्त्रे कौटल्यः कर्मान्तकाधिकरणे हिमालये भवायाः मुक्ताया अप्युल्लेखं करोति–

**हैमवतञ्च मौक्तिकम्।**[४४]

मणिमन्तकपर्वते वज्रमणेः खनिं समुद्दिश्य हीरकस्योत्पत्तिस्थानत्रयमुल्लेखितम्– भूमिः रसः प्रकीर्णकञ्च (विविधपाषाणाः)।

एवं हिमालयः खनिजसम्पत्तिमत्त्वात्सदैव मानवानामाकर्षणकेन्द्रत्वेन स्थितः। आकरेषु सन्निहितस्य धनस्य सन्दोहनप्रवृत्तिः मानवसभ्यतायाः विकासकालादेवासीदिति प्रमाणं प्राप्यते। एतस्मादेव कारणदाकरा आयशरीरमित्युक्ताः।

**हिमालयस्य भूगर्भीयसंरक्षणम् :**

पौराणिकाख्यानेषु पृथिवीदोहस्य प्रसङ्गः सविस्तरं प्राप्यते। तदनुसारं सृष्ट्यनन्तरं पृथिव्या उद्धारः तदनु वैन्येन भूगोलकस्योच्चावचानां समीकरणेन निवासयोग्यभूनिर्माणस्योल्लेखोऽस्ति। ततश्च तदाज्ञया विविधपदार्थानां दोहन–स्याख्यानमस्ति। क्रमेऽस्मिन् मेरोः दोहनमप्युक्तमस्ति। गोदोहे वत्सः वक्षःस्थितस्य क्षीरस्य प्रवाहमुद्घाट्य गोदोहस्य सारभूतं पुष्टिदं बलदं जीवनदञ्च पयः लोकेभ्यः प्रवर्तयति। तद्रूपकेण मेरुः (महाहिमालयः) गौरित्युक्तः। हिमालयः (लघुहिमालयः) वत्स इत्युक्तः।[४५] अस्य तात्पर्यमेतत्प्रतीयते, यद्हिमालयस्य शैलानां सन्दोहनेनायस्कानां तत्रस्थानां धातुरत्नमण्यादीनां च ज्ञानं विधाय मेरौ सन्निहितायाः भूगर्भीयसम्पदोऽनुमानं सुकरं भवति। किन्तु हिमालयस्य कृते गोवत्सस्योपमानं तस्य संरक्षणपक्षमपि पुष्णाति।

सम्प्रति निरन्तरं मानवीयहस्तक्षेपेण न केवलं हिमालयस्य पर्यावरणसन्तोलनस्य समस्योपस्थिताऽपितु तस्य प्राकृतिकस्वरूपं सौन्दर्यञ्चापि प्रभाव्यते। प्राकृतिक–सम्पत्तिरनुदिनं मानवस्य लोभेन कवलीक्रियते। अस्यां स्थितौ दोग्धृभोक्तृवत्सानामिति त्रयाणामपि पोषणाय मातृभावनया समादरश्रद्धाभावनया च संरक्षणपूर्वकं सन्दोहनं करणीयम्।

तात्पर्यमेतदस्ति यद्, भूगर्भीयनिधीनां खननं स्थितिपरिमाणादीनां सम्यग्ज्ञानं प्राप्य तावन्मात्रकमेव करणीयं यथा गोरूपधरा पृथिवी चिरमक्षुब्धा मानवपोषणाय समर्था स्यात्। हिमालयोऽस्मभ्यं प्रकृत्या प्रदत्तोऽनुपम उपहारो वर्तते। अस्य प्रत्यङ्गं

मानवायामृतवदस्ति। एकतो हिमाच्छादितशिखराणि जलवायुनियमने महत्त्वपूर्णभूमिकां निर्वहन्त्यपरतः सुरम्याणि स्थलानि पर्यटकाणां मनोविनोदाय स्वास्थ्यलाभाय च तानाकर्षयन्ति। वक्षस्थले वनस्पतीनामपारभाण्डारं सञ्चिन्वन् शैलोरस्केष्व–नन्तरत्नधातून्निधाय सौभाग्यस्याखण्डपरम्परास्वरूपं तिष्ठति हिमालयो नाम नगाधिराजः–

**अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम्।**[४६]

एतस्मादेवासौ देवतात्मेति कथ्यते सदैव प्रदानशीलत्वात्। देवताप्रसादनाय तप आवश्यकम्। तपश्च विवेकसंयमावेव। असामयिकभूस्खलनेभ्यः भूकम्पेभ्यः दैवीयापदभ्यश्च हिमालयस्य रक्षार्थं तस्य भूगर्भस्य सदयदोहनं महत्त्वपूर्णघटकत्वेन कल्पनीयम्।

संस्कृतवाङ्मये भूगर्भीयधनसन्दोहनाय केचिन्नियमा उक्ताः। खननमपि यज्ञ इत्युक्तम्। खननस्योद्देश्यं लोकलाभो भवेद् विधिश्च वैज्ञानिको भवेत्। यजुर्वेदे यज्ञेन (वैज्ञानिकविधिना) पाषाणादिरत्नानां धातूनाञ्च प्राप्तिः कल्पिता –

अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे हिरण्यश्च मेऽयश्च मे श्यामं च मे लोहं च मे सीसं च मे त्रपु च मे यज्ञेन कल्पन्ताम्।[४७]

अन्यत्रापि खनिशाशास्त्रे आकरशास्त्रे च खननप्रक्रियायाः वैज्ञानिकमुपयोगिज्ञानं निहितमस्ति। खेदस्य विषयोऽस्ति यदन्धविज्ञानस्य युगेऽस्मिन् शास्त्रीयविचारान् तिरस्कृत्य वयं प्राप्तेरधिकं ह्रासं सहामहे।

कौटल्येन कर्मान्तिकप्रकरणे बाह्यचिन्हानवगम्य भूमिप्रस्तररसेषु निक्षिप्तानां धातूनां गौरवरसोग्रगन्धैः परिज्ञानेन परीक्षणं खननात्प्रागावश्यकं मतम्–

**भूमिप्रस्तररसधातुमत्यर्थगौरवमुग्रगन्धरसं परीक्षेत्।**[४८]

पाषाणभूमिः स्वभावतः स्वरूपतश्च शीघ्रमपरदनशीलाऽपक्षयशीला च भवति। अतः हिमालयतत्पार्श्ववर्तिक्रोडवर्तिप्रदेशानाञ्च रक्षार्थं पर्वतीयजनजीवनस्य संस्कृतेश्च दैविविपदभ्यो रक्षणार्थं हिमालयस्य भूगर्भः संरक्षणीयः।

---

सन्दर्भाः–

१. कुमारसम्भवम् १/१

२. शतपथब्राह्मणम् १/१/३/१

३. शतपथब्राह्मणम् ६/१/१/११

४. बृहत्संहिता-भूकम्पलक्षणाध्यायः -

५. ऋग्वेदः १०/२१/ ४ ए अथर्ववेदः १२/१/११

६. तदेव- ५/८७/६

७. ऋग्वेदः ७/३४/४

८. तदेव २/१२/२

९. ऋग्वेदः ५/६१/१९

१०. तदेव ४/३/१४

११. तदेव ५/८३/७

१२. तदेव ५/४१/१

१३. मत्स्यपुराणम्

१४. पुराणविमर्श

१५. मत्स्यपुराणम् ११३/४०

१६. ज्योग्राफी आफ इण्डिया - डा. आर.सी. तिवारी - पृ. २१

१७. मत्स्य पुराणम् ११३/२५

१८. ब्रह्मपुराणम् २७/६६ वायुपुराणम् ३३/५२ मार्कण्डेयपुराणम् ३/४०

१९. कुमारसम्भवम् ६/६८

२०. ब्रह्मपुराणम् २१/३

२१. कुमारसम्भवम् ६/५१

२२. तदेव १४/३१

२३. सिद्धान्तदर्पणम् १६/१९

२४. कुमारसम्भवम् ६/७३

२५. कुमारसम्भवम् ६/५०

२६. मत्स्यपुराणम् - हिमालयवर्णनम्

२७. पद्मपुराणम् १०/१५

२८. मत्स्यपुराणम् ११४/२०.२२

२९. चरकसंहिता - सूत्रस्थानम् २७/२०१/१

३०. मत्स्यपुराणम् ११९/८.२२

३१. तदेव ११९/२२.२३

३२. तदेव ११७/७

३३. वाल्मीकि रामायणम्

३४. संसकृतवाङ्मयकोशः - भाग-३

३५. ऋग्वेदः १/६४/७

३६. तदेव १०/६९/६

३७. तदेव ७/१३०/३

३८. तदेव ७/६७/१०

३९. मत्स्यपुराणम् १२०/१

४०. उत्तरमेघः ६

४१. कुमारसम्भवम् ६/३७.३८

४२. उत्तरमेघः मत्स्यपुराणम् ११७/५.६

४३. मत्स्यपुराणम् ५/९

४४. अर्थशास्त्रम् २/११/२

४५. पद्मपुराणम् भूमिखण्डः २९/६७.६९ ब्रह्मपुराणम्, मत्स्य पुराणम्, भागवत पुराणम् ४/१८/२९

४६. कुमारसम्भवम् १/२

४७. यजुर्वेदः १८/१३

४८. अर्थशास्त्रम् २/१२/१



# कृषिपरम्परायां बीजवपनम्

बीजवपनं कृषिविज्ञानस्य मेरुदण्ड इति वक्तुं शक्यते। यथा भारतीयसामाजिकपृष्ठभूमौ गर्भाधानं संस्कारत्वेन कल्प्यते यस्य विधिपूर्वकं मन्त्रपूर्वकं च प्रजाकामनया नियोजनेन शुभसंस्कारवती सन्ततिः प्रजायते, तथैव युक्तिपूर्वकमुप्तं वीजं पुष्टं प्रभूतं चान्नं कल्पयतीति प्राच्यकृषिवेत्तॄणां मतम्। वपनं नाम वीजसन्तानम् भूमौ स्थापनमिति। उत्तमकृषेः प्रथमसंस्कारः कर्षणं भवति द्वितीयकर्मतया च वपनमिष्यते। शतपथब्राह्मणे कृषिक्रमाणां चतुष्टय्यां कर्षणानन्तरं वपनस्योल्लेखः कृतः। कर्षकः क्षेत्राजीवो वा वपनविधिं सम्यग् विज्ञाय कृषिकर्मणि प्रवर्तताम्। मनुस्मृतौ कृषकस्य प्रथमो गुणः वीजानामुप्तिविदित्युक्तम्। मन्वर्थमुक्तावलीकार उक्तकारिकांशस्य तात्पर्यं वक्ति–

**इदं बीजमस्मिन्काले तत्र संहतं चोप्तं प्ररोहत्यस्मिन्नित्येवम्।**

वैदिकवाङ्मये कल्पसूत्रेषु गृह्यसूत्राणामुपदेष्टा कश्चिद् वैजवाप ऋषिरुल्लेखितो यस्य तन्नामकं गृह्यसूत्रमासीत्–

**एवं च वैजवापेनाचार्येण सूचितं न सावित्रीमाह इति।**

यद्यपि सम्प्रति वैजवापगृह्यसूत्रं न प्राप्यते, किन्तु वैजवाप इति शब्दः गुणवाची प्रतीयते। तस्य निर्वचनं च वीजानि वपतीत्येवं कर्तुं शक्यते। उल्लेखनीयमस्ति यद् ऋग्वेदे वीजानामुप्ता वप इति पदेनाभिधीयतेस्म। उक्तोल्लेखेन प्रतीयते यद् कृषिकर्मणि वपनाधिकारः यस्य कस्यापि नासीदपितु यो वपनविधिं सम्यग्जानाति स एव वपनार्थं नियोज्यतेस्म। वपनार्थमावश्यकविधिरुपायाश्च संस्कृतवाङ्मये यथा निर्दिष्टाः तदनुसारं निम्नलिखितबिन्दुषु वपनस्य विश्लेषणं कर्तुं शक्यते–

१. उत्तमवीजानां गुणाः
२. वाप्यवीजानां सङ्ग्रहविधिः
३. बीजरक्षणम्
४. बीजसंस्कारः
५. विविधधान्यानां वापविधयः
६. वापकालः

७. वपनार्थं विधिनिषेधौ

## उत्तमवीजानां गुणाः

बीजं वै कृषेः प्रकृतिर्भवति। स एव सस्यतया चीयते। अतः यथा बीजं भवति तथा कृषिर्भवति इति नियमोऽवधेयः। काश्यपः कृषेः प्रथमं धनं बीजराशिमेवामन्यत–

**बीजराशिः परश्रेयः कृषेस्तु प्रथमं धनम्।**

उत्तमप्रजातिः सुपक्वं स्थूलं मांसलं बीजं वापायोत्तमम्। पराशर एकरूपं बीजराशिमुत्तमं मन्यते। स हि फलप्रदो भवति। अतः प्रयत्नपूर्वकम् समरूपाणि बीजानि सङ्ग्रहणीयानि–

**एकरूपं तु यद्बीजं फलं फलति निर्भरम्।**
**एकरूपं प्रयत्नेन तस्माद्बीजं समाचरेत्।।**

## वाप्यवीजानां सङ्ग्रहविधिः

कृषिकर्मण उपक्रमे वाप्यवीजानां सङ्ग्रहः यथाकालं क्रियते। सामान्यतः लवनमृणनानन्तरं यदा गृहेषूपयोगार्थं धान्यं नीयते तदैव बीजसङ्ग्रहः क्रियते। शाकादीनां वृक्षादीनां वा बीजानि यथाकालं फले पक्वे सति सङ्गृह्यन्ते। काश्यपः बीजादेव कृषिकार्यस्यारम्भं मत्वा युक्त्या बीजसङ्ग्रहः कल्पनीय इति मन्यते –

**आरब्धं कृषिकार्यं तु बीजमुख्यं प्रकीर्तितम्।**
**अतः सुधीभिर्भूलोके कृषिकर्मविदां वरैः।।**
**बीजानां सङ्ग्रहो युक्त्या कल्पनीयो विनिश्चितः।**

का च सा युक्तिरिति ज्ञानार्थं बीजसङ्ग्रहस्य नियमः कालादयश्च विचारणीयाः। यतोहि यथाकालं बीजवापार्थं यत्नेन बीजसङ्ग्रहः कर्तव्य इति कृषिविदां मतम्–

**बीजावापः प्रकर्तव्यो यथाकालमतन्द्रितैः।**
**तस्मात्सर्वप्रयत्नेन तद्रक्षणमुदीरितम्।।**

काश्यपस्य मतानुसारं खलभूमावेवार्कातपे शोषितानां सुपक्वानां बीजानां रक्षणं सङ्ग्रहश्च कार्यः।

कृषिपराशरानुसारं वाप्यवीजानां सङ्ग्रहं कृत्वाऽतपे शोषयेत्। शोषणार्थं च भूमौ वीजानि न स्थापनीयानि।

**माघे वा फाल्गुने मासि सर्ववीजानि संहरेत्।**
**शोषयेदातपे सम्यक् नैवाधो विनिधापयेत्।।**

सङ्ग्रहशिरोमणिकारः बीजसङ्ग्रहे कालयोगं परीक्ष्यं त्रिष्वपि हस्तनक्षत्रेषु

पुनर्वस्वोः रोहिण्यां श्रवणे वा स्थिरे लग्ने शुभवासरे वीजसञ्चयं शुभं मन्यते–

**हस्तत्रये पुनर्वस्वोः रोहिण्यां श्रवणद्वये।**
**स्थिरे लग्ने शुभे लग्ने विचन्द्रे बीजसङ्ग्रहः।।**

## बीजरक्षणम्

यथाकालं वापार्थं सुपुष्टानि पक्वान्युत्तमानि रसपूर्णानि च वीजानि प्राप्यन्तामित्यर्थं वीजानां रक्षणं कर्तव्यम्। अयं क्रमः सनातनो वर्तते। मत्स्यादिपुराण आसन्नप्रलये विशेषविधिना सर्वेषामपि बीजानां रक्षणार्थं स्वयं मत्स्यरूपधरेण परमात्मना मनवे विशेषा नौका प्रदत्ता रक्षणविधिश्चोक्तः। तदनुसारं सर्वाण्यपि वीजानि पुटीकृत्य यथार्द्रत्वादिप्रभावो न जायतां तथा रक्षणीयानि। कृषिकोविदः सर्वविधं कृषिकार्यं सम्पादयितुं तत्तद् देशकालानुसारं वीजरक्षणं विविधपात्रस्थानेषु कुर्वन्ति। काश्यपः बीजरक्षणार्थं स्थानत्रयमुपयुक्तं मन्यते।

क. खलभूमिः
ख. गृहभाण्डारः
ग. राजप्रवर्तिताः भाण्डाराः

अर्कातपे सुशोषितानि सुपक्वानि बीजान्युक्तेषु स्थानेषु रक्षणीयानि। तत्र खलभूमिषु सम्भाव्यं चेत्तर्हि वरं भवति। तदभावे गृहेष्वथवा सर्वकारिभाण्डारेषु कृषकैः शुल्कपद्धत्या राजसाहाय्येन वा बीजानि रक्षणीयानि। अथवा राजा यथाकालं बीजानां रक्षणस्य व्यवस्थां कृत्वा काले कृषकेभ्यः वपनार्थं दद्यात्।

**अर्कातपे शोषितानां सुपक्वानां खलस्थले।**
**स्वगृहे वा रक्षणं तु प्रधानं शुभवर्धकम्।।**
**भूपालैरथवा रक्ष्यं काले देयं प्रकीर्तितम्।**

यथावश्यकं त्रिमासतः षण्मासपर्यन्तमधिकं वा बीजानि संरक्ष्यानि भवन्ति चेत्तर्हि फलप्राप्त्यर्थं वपनार्हाणि भवन्ति। यथोक्तम्–

**एतानि तानि बीजानि सम्पूर्णफलदानि च।**
**मासेषु त्रिषु वाप्यानि चतुर्मासेऽथवा स्थले।।**
**कानिचित्पञ्चमासेषु षण्मासेष्विह कानि च।**
**सप्तमासेष्वष्टमासेष्वधिकक्रमतः क्वचित्।।**

रक्षणार्थं विविधभाण्डेषु पलालराशिषु कुण्डेषु वा तथा रक्षणीयानि बीजानि यथा शश–मूषकमार्जारादिभिः जलकणैः वातवृष्ट्यादिभिश्चान्यदोषैश्च दूषितानि न स्युः–

**सुपक्वानामातपे तु शोषितानां विशेषतः।।**
**बीजानां सन्ततिः रक्ष्या भाण्डेषु विविधेषु च।**
**पलालराशिषु तथा कुण्डेष्वपि कृषीवलैः।।**
**शशमूषकमार्जारैः न दूष्या बीजसन्ततिः।**
**जलराशिकणैर्वापि वातवृष्ट्यादिभिस्तथा।।**
**यथा न दूषिता दोषैरन्यैश्च विविधैरपि।**
**बीजानां सन्ततिः पाल्या तथा गेहे खलस्थले।।**

पराशरः बीजराशेः तृणादिकमपसार्य तेषां शुद्धीकरणं सुदृढं पुटीकृत्य च तस्य स्थापनस्योपदेशं करोति–

**बीजस्य पुटिकां कृत्वा विधान्यं तत्र शोधयेत्।**
**बीजं विधान्यसंम्मिश्रं फलहानिकरं परम्।।**
**सुदृढं पुटकं कृत्वा तृणं छिन्द्यात् विनिर्गतम्।**
**अच्छिन्नतृणके ह्यस्मिन् कृषिः स्यात्तृणपूरिता।।**

तृणादीनामपसारणं कृत्वाऽचिरादेव तानि नाशयेयुर्यतोहि तृणमिश्रितानां बीजानां वपनेन तेषु सम्मिश्रितानि वीजानि प्ररोहादिना न केवलं बीजानां शक्तिं क्षीणां कुर्वन्त्यपितु कृषकाः सस्यवृद्धिकाले ततः तृणादिनिरसनार्थमधिकं श्रममपेक्षन्ते। पराशरोक्तोऽयं विधिस्तिलधान्ययवानां कृते मन्तव्या। यथा निर्दिशति पराशरः–

**तिलधान्ययवानाञ्च विधिरेषः प्रकीर्तितः।**
**बीजे यत्नमतः कुर्याद् बीजमूला फलश्रियः।।**

उक्तप्रकारेण शोषितानि पुटीकृतानि बीजानि वल्मीके गोस्थाने प्रसूतानिकेतने वन्ध्यागृहे च न स्थापनीयानि–

**न वल्मीके न गोस्थाने न प्रसूतानिकेतने।**
**न च वन्ध्यावतिगेहे बीजस्थापनमाचरेत्।।**

उक्तविधौ हेतुरयं यद्वल्मीकिः बीजक्षयकृद्भवति, पिपीलिकादयो हि वीजानि सम्प्राप्य क्षतानि कर्तुं शक्नुवन्ति। गोस्थाने शकृत्मूत्रादिभिः बीजानि सार्द्राणि विरसानि दुर्गन्धयुक्तानि च भवितुमर्हन्ति। एवमेव प्रसूतिकागृहे स्थापितानि बीजानि शुचियुक्तानि न भवन्ति। वन्ध्यागृहे वीजरक्षणनिषेधोऽभिचारमात्रं प्रतीयते। उच्छिष्टं वीजं न स्पृशेत्। एवमेव वन्ध्या गर्भिणी सद्यःप्रसूतिका वा वीजं न स्पृशेत्। बीजपुटिकोपरि घृतं तैलं तक्रं प्रदीपं लवणं च भ्रमेणापि न स्थापयेत्–

**नोच्छिष्टं स्पर्शयेद्वीजं न च नारीं रजस्वलाम्।**
**न वन्ध्या गर्भिणी चैव न च सद्यःप्रसूतिका।।**

**घृतं तैलं च तक्रं च प्रदीपं लवणं तथा।**
**बीजोपरि भ्रमेणापि कृषको नैव कारयेत्।।**

वस्तुतः घृततैलयोः बीजोपरि स्थापनेन, तत्स्नेहेन बीजानां रन्ध्रकूपानि (त्वग्रन्ध्राणि) अनवकाशानि जायन्तेऽतः वपनकाले जलसेचनेन बीजानामन्तः जलं न सम्यक् प्रविशति। अङ्कुराणि च सम्यग् न जायन्ते। तक्रं लवणं च क्षाररसवत्त्वाद्बीजस्य प्रजननशक्तेः क्षीणतायाः कारणत्वेन कल्प्येते। प्रदीपश्च दीपको भवति, अतः कदाचिदनवधानेन प्रमादेन संयोगवशाद्वा बीजसम्पर्कं प्राप्याग्निकाण्डस्य कारणं भवितुमर्हति।

गार्ग्यस्य मतेनापि दीपाग्निधूमवृष्टिभिः प्रभावितं गर्तेषु स्थापितं वा वीजं वपनार्थं वर्जनीयम्–

**दीपाग्निधूमसंस्पृष्टं वृष्ट्या चोपहतं च यत्।**
**वर्जनीयं सदा बीजं यद् गर्तेषु निधापितम्।।**

उक्तप्रकारकेषु बीजेषु शुष्कता क्षतिः जलार्द्रता बीजफुल्लता च जायन्ते। अतः तादृग्बीजं वपनकालं यावद् न रक्षितुं शक्यते, न च फलप्रदं भवति। गार्ग्यः विधान्यमिश्रितं बीजं वन्ध्यं भवतीति मन्यते–

**विधान्यं गुडकोन्मिश्रं तदबीजं वन्ध्यतां ब्रजेत्।** वन्ध्ये सति बीजे सर्वेऽप्युपाया अफलाः भवन्ति।

**कृषाणसारकेदारवृषनीरदसञ्चयाः।**
**सर्वे ते वन्ध्यतां यान्ति बीजे वन्ध्यत्वमागते।।**

कौटिल्यः सर्वप्रकारकाणां धान्यबीजानां रक्षणमेतादृश्युच्चस्थान उपयुक्तं मन्यते यत्र भूमेः स्पर्शः न स्यात्–

**उच्चैः धान्यस्य निक्षेपः।**

एवं माघफाल्गुनयोः यथाकालं वा सुपक्वानि सुशोषितानि सर्वधान्यबीजानि वायुरोधिपात्रेषु पुटेषु वा स्थापयित्वाऽनार्द्रशीते किञ्चिदुष्णस्थाने रक्षणीयानि–

शाकादीनां पुनर्बीजानि ऋत्वनुसारं पादप एव सुपक्वानि, ततश्च सङ्गृह्यातपे शोषयित्वा धान्यवदेव रक्षणीयानि। वृक्षाणां बीजरक्षणस्य विधिस्तदभिन्नो भवति। तत्र देशाचारः परम्परा च मुख्ये भवतः। वीजरक्षणस्य दायित्वं राज्ञोऽपि भवति। राज्ञा नाना वृक्षाणामावल्यः बीजानि च रक्ष्याणि। यथाकालं च प्रजाभ्यः वापार्थं प्रदातव्यानीति काश्यपस्य मतम्।

**नानावृक्षावलीवीजरक्षणं तत्र निर्दिशेत्।**
**फलैः पुष्पैश्च फलकादारुखण्डादिभिर्नृपः।।**

**बीजसंस्कारः**

उत्तमक्षेत्रेभ्य उत्तमजातेः पक्वानि स्निग्धानि बीजानि सङ्गृह्य तेषां संस्कारः कर्तव्यः। अर्थशास्त्रकारः बीजानां भेदद्वयं स्वीकरोति– काण्डबीजमस्थिबीजञ्च। तत्रोभयोरपि संस्कारविधिः पृथग् भवति। एवमेव विविधधान्यानां बीजसंस्कारस्य विधिरपि पृथग्भवति। सामान्यतः कौटिल्यः त्रिषु वर्गेषु वीजसंस्कारं निर्दिशति–

**क. सामान्यधान्यवीजानि–**

सामान्यधान्यानां ( शाल्यादीनां ) वीजानि सप्तदिनानि यावत् रात्रिकाले तुषारे दिवसकाले चातपे स्थापयित्वा वपनार्थं प्रयुज्येत।

**ख. कोशीधान्यानां बीजसंस्कारः–**

कोशीधान्यानि तुषयुक्तानि धान्यानि भवन्ति तानि च मुद्गमाषादीनि रात्रौ तुषारे दिवसे चातपे त्रिभ्यः पञ्चदिनानि यावत् स्थापयित्वा वपनयोग्यानि कुर्यात्।

**ग. काण्डबीजानां संस्कारः–**

इक्ष्वादीनां काण्डानि मधुघृतेन शूकरवसया वा शूकरवसायुक्तशकृता वा छेदलेपं कृत्वा वपनयोग्यानि कृत्वा स्थापनीयानि।

**घ. अस्थिबीजानां संस्कारः–**

अस्थिबीजानि फलान्तर्हितानि बीजानि भवन्ति। तानि च गोमयादिभिः लेपनं कृत्वा स्थापयेत्।

**ङ. वृक्षबीजानां संस्कारः–**

आम्रपनसादिवृक्षाणां बीजानि गर्ते स्थापयित्वा किञ्चिदुष्णतां प्राप्य यथासमयं गोऽस्थिगोमययुक्तानि कृत्वा स्थापयेत्।

**तुषारपायनमुष्णशोषणं चासप्तरात्रादिति धान्यबीजानां त्रिरात्रं पञ्चरात्रं वा कोशीधान्यानां, मधुघृतसूकरवसाभिः शकृद्युक्ताभिः काण्डबीजानां छेदलेपो मधुघृतेन कन्दानामस्थिबीजानां शकृदालेपः शाखिनां गर्तदाहो गोऽस्थिशकृद्भिः काले दौहृदञ्च।** – अर्थशास्त्रम्

बृहत्संहितायां वराहमिहिरः सर्वविधानां वृक्षाणां बीजानां संस्कारार्थं तान् घृतयुक्तहस्ताभ्यां योजयित्वा दुग्धेन भावनां कुर्यादिति स्वीकरोति। एवमेव वीजानि दश दिनानि घृतदुग्धाभ्यां भावयित्वा बहुवारं गोमयेन विरुक्ष्य शोषयेत्। ततः शूकरहिरणयोः मांसेन धूपयित्वा पुनश्च मांससूकरवसासमन्वितं वीजं प्रथमं तिलवापेन

शोधितायां भूमौ वपेत्। दुग्धमिश्रितजलेन च सिञ्चेत्। एवं कृतसंस्कारमुप्तञ्च वीजं नूनमेव कुसुमयुक्तं भवति–

**वासरे शतदुग्धभावितं बीजमाज्ययुतहस्तयोजितम्।**
**गोमयेन बहुशो विरुक्षितं क्रोडमार्गपिशितैश्च धूपितम्।।**
**मांसशूकरवसासमन्वितं रोपितं च परिकर्मितावनौ।**
**क्षीरयुक्तजलावसेचितं जायते कुसुमयुक्तमेव तत्।।**

सूरपालः वृक्षायुर्वेदे कपित्थवीजस्य संस्कारार्थं धात्री–वच–अभय–अस्फोट–अश्म–वेतस–शिंशपा– सूर्यवल्ली–अतिमुक्ता–पलाशिनी चेत्येतेषां मूलं शतगुणे दुग्धे क्वथयित्वा तद्रसे एकमासेन कपित्थबीजं रक्षणीयम् इति निर्दिशति।

**वापविधिः क्रमश्च**

वाप्यानुसारं स्थलसाधारणानूपानामन्येषामपि च गुणजात्यनुसारं भूविभागानां चयनं कृत्वा रक्षितानि कृतसंस्काराणि च बीजानि पुनः शोधयित्वा वपनक्रिया कार्या। वनस्पत्योषधीनामेव रूपानुसारं प्रथमं वपनस्य रूपद्वयं विज्ञेयम् बीजवपनम् रोपणञ्च। उभयोरपि वपनविधिः भिन्नो भवति। यथाक्रममुभयोः विधिः निर्दिष्टप्रकारेण ज्ञेयः–

**क. बीजवपनम्**

प्राय ओषध्यादीनां बीजान्युप्यन्ते। तत्कृते च यथाप्रकृति स्थल्यामनूपायां वा भूमौ वीजानि वपेयुरिति कौटिल्यः –

**यथास्वं भूमिषु च स्थल्याश्चानूप्याश्चौषधीः स्थापयेत्।**

वातपत्तिकफानां सङ्घटनानुसारं वनस्पत्योषधीनां प्रकृतिः भिन्ना भवति। केचिद्रुक्षाः केचिच्च स्निग्धाः भवन्ति। केचिदधिकजलापेक्षिणो भवन्ति केचिच्चाल्पजलापेक्षिणो भवन्ति। तदनुसारं विविधौषधीनां वनस्पतीनां वानस्पत्यानां लताप्रतानानाञ्च वापविधौ केचिन्नियमाः साधारणाः भवन्ति केचिद्विशिष्टाः।

संस्कृतवाङ्मये बीजवपनं प्रायः त्रिधा स्मृतम्–

क. सीताश्रेणीषु वीजसन्तानः
ख. बीजप्रकीर्णनम्
ग. वीजस्थापनम्

**सीताश्रेणीषु बीजसन्तानः**

धान्यौषधीनां वपनार्थं विधिरयं सर्वाधिकं प्रचलितो मतः। तदनुसारं सम्यग्भूकर्षणं कृत्वा फालाद्युपकरणैः कुल्यावद् योनिवद्वा सीताश्रेणीः कृत्वा बीजवपनस्य विधानं

क्रियते–

**क्लृते योनौ वपते ह वीजम्।**

वैदिकवाङ्मये लाङ्गलरेखासु चमसैः वीजसन्तानस्योल्लेखः प्राप्यते। हस्तेन वपनं निषिद्धम्।

**बीजप्रकीर्णनम्**

रामायणेऽर्थशास्त्रे च मुष्ट्या बीजप्रकीर्णनस्य चर्चा प्राप्यते। यथा रामायणे **'नाराजके जनपदे वीजमुष्टिः प्रकीर्यते'** इत्युक्तम्। अन्यत्रापि **क्षिप्तमिति** पदेन प्रकीर्णनस्य विधानं सङ्केतितम्।

**खनित्वा बीजस्थापनम्**

अथर्ववेदे क्षुरेणोत्खाते गर्ते बीजवपनं स्मृतम्–

**येनावपत् सविता क्षुरेण।**

शतपथब्राह्मणे स्फ्यः शम्या चेत्युपकरणे बीजवपनार्थं स्तम्बहविर्हरणार्थञ्चोक्ते। उभेऽपि तीक्ष्णाग्रे खड्गाकृती क्षुरिकाकृती मते। एते उपकरणे खादिरकाष्ठनिर्मिते वरे उक्ते। बौधायनधर्मसूत्रानुसारेण कन्दमूलफलशाकाद्योषधीनां वीजानि कुद्दालेन फालेन तीक्ष्णकाष्ठेन वा खनित्वा वीजानां वपनं करणीयम्। एष विधिः जलपूरिते क्षेत्रे वपनार्थमुपयुक्तः प्रतीयते–

**जलाभ्याशे कुद्दालेन वा फालेन वा तीक्ष्णकाष्ठेन वा खनति वीजानि आवपति कन्दमूलफलशाकौषधीर्निष्पादयति।**

स्मृतिकारेण पराशरेण प्रकारान्तरेण वपनं (स्थापनं) प्रक्षेपणं चेति वपनस्य द्वौ विधी मतौ। यथा सः उदाहरति–

**सुक्षेत्रे च सुपात्रे च उप्तं दत्तं न नश्यति।**

तथा च–

**सुक्षेत्रे च सुपुत्रे च यत्क्षिप्तं नैव नश्यति।**

उक्तश्लोकांशयोः उप्तं क्षिप्तं चेति पदे वपनविध्योः बोधके स्तः। एवमोषधीनां वपनार्थं विधित्रयमिष्टम्।

**रोपणम्**

ओषधीनां तरुपादपानां च रोपणेनाङ्कुरत्वात्तेषां बीजस्थापनं रोपणात्मकं भवति। रोपणं प्रायः द्विधा प्रचलितम् – ओषधीनां शाल्यादीनां रोपणं वृक्षरोपणं च। तत्र शाल्यादीनां रोपणं क्वचिन्निर्दिष्टस्थान उपायपूर्वकं क्षिप्तबीजानामविर–

लप्ररूढान्यङ्कुराण्युत्खात्यान्यत्र कर्षितासु कृतसीतासु भूमिषु क्रियते। अयं विधिः शाल्यादीनां कृषिक्रमे वरो मतः। पादपवृक्षाणां काण्डं कर्तयित्वा कृतसंस्कारस्य तस्य कर्षितायां भूमौ स्थापनं काण्डरोपणमुच्यते। वस्तुतः धान्यबीजवदेव काण्डमपि कृत्रिमबीजमेव भवति। क्षुपाणां काण्डरोपणविधिः वृक्षाणां काण्डरोपणा-त्किञ्चित्पृथग्भवति। अग्निपुराणे सर्वेषामपि काण्डरोप्याणामोषधीनां बीजनिर्माणविधिरुक्तः। तदनुसारेण तत्तदोषधीनां यवशाल्यादिधान्यानामङ्कुरप्राप्त्यर्थं शरावघटिकापालीत्यादिपात्रविशेषाणां प्रयोगः कर्तव्यः। रक्षितानि बीजानि क्षालयित्वैतेषु मृत्पात्रेषु मृत्तिकाजले सम्पूर्य वापयेत्–

**शरावघटिकापालीस्वङ्कुरारोहणे हिता।**
**यवाञ्शालींस्तिलान्मुद्गान् गोधूमान्सितसर्षपान्।**
**कुलत्थमाषनिष्पावान्क्षालयित्वा तु वापयेत्।**

अङ्कुरप्राप्त्यर्थं शरावादीनां प्रयोगे नैके हेतवः भवितुमर्हन्ति। प्रथमं तावद्द्रष्टव्यम् यद् वपनार्थमपुष्टाः शिश्वङ्कुरा एव वराः भवन्ति। शरावादिष्वल्पगाम्भीर्यत्वान्मृदः मूलानां दार्ढ्यभयं न भवति। अपरञ्च क्वचिदन्यत्र स्थानान्तरणे पात्रैः सहितं तान्यङ्कुरबीजानि नीत्वा यथापेक्षितकालेऽचिरादेवोत्खात्य वपने (आरोपणे) सरलता भवति। रोपितबीजेष्वधिकोत्पादकता भवतीत्यपि कृषिविचक्षणानां मतम्। आधुनिका कृषिवैज्ञानिका अपि एतद् मन्यन्ते।

क्षुपाणां काण्डानि क्वचित्समूलानि क्वचिच्च छिन्नमूलानि रोप्यन्ते। ये क्षुपाः द्रुमाश्च छिन्नमूलाः रोप्यन्ते तेषां मूलोच्छेदे स्कन्धे च घृतोशीरतिल-क्षौद्रविडङ्गक्षीरगौमयैरामूलस्कन्धं प्रलेप्य वपनं कुर्यात्।

एवं पराशरादिभिः भारतीयैः कृषिशास्त्रविचक्षणैः वीजवपनस्य चर्चा कृता, या न केवलं प्रचुरधान्यफलावाप्तये महत्त्वपूर्णा वतर्तेऽपितु भारतीयकृषियुक्तेः समृद्धेः परिचायकोऽपीति नात्र सन्देहः।



# कुल्याप्रकल्पनम्

कृषिप्रधाने भारतवर्षे वैदिककालादेवादेवमातृकोपायान् कल्पयन्तो भारतीयाः कृषकाः वैज्ञानिकाः राजानश्च सेचनसाधनत्वेन कुल्यादीनां प्रकल्पनं कृतवन्त इति प्रायः सर्वत्रैव प्राप्यते विवेचनम्। अथर्ववेदे ऋषिः सर्वथा पृथिव्याः समृद्धिं कामयन् प्रार्थयते यत्साऽहर्निशं प्रवहमानैः परिचरैरिव नियन्त्रितैः जलैरन्नादि प्रदाय वर्चसा वर्धयताम्–

**यस्यामापः परिचराः समानीरहोरात्रे अप्रमादं क्षरन्ति।**
**सा नो भूमिर्भूरिधारा पयो दुहामथो उर्क्षतु वर्चसा।।**

अर्थववेद– १२/१/९

उक्ते मन्त्रेऽलङ्कारात्मकभाषयाऽहोरात्रे समरूपेणाप्रमादं क्षरन्त्या आपः परिचरा उक्ताः। परिचरा इत्यनेन पदेन यासामपां सङ्केतः प्राप्यते तद्विषये तथ्यद्वयं विचारणीयम्– प्रथमं तावत्परितश्चरन्तीति निर्वचनेन्न सर्वतो धारारूपेण प्रवहमानं जलमभिप्रैतम्। अपरञ्च यथा परिचराः स्वाम्यधीनाः सन्तस्तस्य निर्देशानुसारेण नियन्त्रणेन च कर्मरताः भवन्ति तथैवापोऽपि राजनियन्त्रिताः स्युः। अपां राजनियन्त्रणं वस्तुतः तासां कृत्रिमप्रवाहव्यवस्थैवेति ज्ञेयम्। एष कृत्रिमप्रवाहः 'भूरिधारा' इति बहुधारातया प्रकल्पितानां कुल्यादीनामेव भवितुमर्हति। तात्पर्यन्त्विदं यद्यस्मिन्देशेऽहर्निशं प्रमादरहितैः परिचरैरिवाप्रमादिभिरभियन्तृभिः कर्मचारिभिश्च नियन्त्रिताभ्यः कुल्याऽल्पिकादिभ्यश्च भूरि जलं प्राप्यते तत्र वर्चसा वृद्धिः सुनिश्चिता, यतोहि तत्रान्नादिकं पर्याप्तपरिमाणेन प्राप्तुं शक्यते। अन्यत्रापि यजुर्वेदे ' शं नो खनित्रिमा आपः' ( यजुर्वेदः– १६/३८ ) इत्यादिषु मन्त्रेषु या आपः मङ्गलाय प्रार्थितास्ताः खननेन लब्धाः कूपतडागाल्पिकाकुल्यादीनां कृत्रिमजलधारा इति मन्तव्यम्। कूपतडागादयस्तत्र मानवानां स्नानपानाशनाद्यपेक्षया जलोपलब्धिसाधनान्युक्तानि। कुल्याश्च कृषिकार्यसम्पादनाय प्रमुखसाधनत्वेन स्वीकृताः। उल्लेखनीयमस्ति यददेवमातृका कृषिः वैदिककालतः प्रचलिता भारतवर्षे, तद्विकासाय च व्यापकस्तरे कुल्यानिर्माणमपि प्रचलितमासीत्। उत्तरवैदिककाले रामायणादौ नैकेषु स्थलेषु राजदायित्वरूपेण कृषिव्यवस्थार्थं कृत्रिमनद्यादिखननस्योल्लेखः प्राप्यते। कौटलीयेऽर्थशास्त्रे वापकालस्य

निर्णयप्रसङ्गे कृषिकरनिर्धारणार्थं 'कुल्यावापानाम्' ( अर्थशास्त्रम् – २/४०/२४ ) इत्युक्तं, येन प्रतीयते यत्कुल्याः कृष्यर्थं राजपक्षतः प्रकल्प्यन्तेस्म, तासां प्रबन्धनमपि राजपुरुषैरेव क्रियतेस्म। अथ च वर्षाभिन्नकालेषु, मरुस्थलेषु , निर्जलप्रदेशेषु , बहुजलापेक्षिषु वापेषु वा कृषिकार्येषु सेचनाद्यपेक्षया कुल्यानां सर्वकालिक्युपयोगिता प्राचीनकालादेव स्वीकृता, तदधीना हि कृषिसमृद्धिः।

तैत्तिरीयोपनिषदि ' अन्नं ब्रह्म' इति परिकल्पनायाः विस्तारं विधाय निष्कर्षतया यया कयाऽपि विधया बह्वन्नं कुर्वीत ' इति मन्त्र उद्घोषितः। उद्घोषेऽस्मिन्नन्नस्य प्रचुरपरिमाणं तदुत्पादनयुक्तीनां वैविध्यञ्चेति चिन्तनस्य पक्षद्वयं भवितुमर्हति। अत्रैतदपि विचारणीयं यद्यया कयापि विधयाऽन्नोत्पादने सेचनाय यथापेक्षितं यथासमयं च जलं कुल्याः विना न सम्भाव्यते, सेचनं हि विधिविशेषापेक्षि भवति। नदीकूलेष्वपि जलानयनसौविध्याय क्षेत्रगामिन्यः कुल्याः प्रणीयन्तेस्म । यथा शाल्युत्पादनाय बहु जलमपेक्ष्यतेऽतो नदीकूलेषु नदीभिन्नस्थलेषु वा तदर्थं कुल्यानिर्माणमावश्यकम्। अष्टाध्याय्याः' देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्' (अष्टाध्यायी–७/३/१) इति सूत्रस्य भाष्ये पतञ्जलिः देविका नाम नद्याः कूले भवानां शालीनामुदाहरणं प्रस्तौति–
**शाल्यर्थं कुल्याः प्रणीयन्ते ताभ्यश्च पानीयं पीयते उपस्पृश्यते शालयश्च भाव्यन्ते।**

पातञ्जलमहाभाष्यम्– ७/३/१

उल्लेखनीयमस्ति यच्छालिः बहुजलापेक्षि बहुसेचनापेक्षि च धान्यमस्त्यतो देविकानद्याः कूले स्थितेषु क्षेत्रेषु कुल्याप्रणयनेन शालीनां सेचनं क्रियत इति भावः।

कृषिकार्याण्यतिरिच्यापि विविधप्रयोजनैः कल्पिताः कृत्रिमजलोच्छ्वासा अपवाहाश्च प्रकल्पनीयाः इति विविधोल्लेखैः ज्ञायते। यथाऽर्थशास्त्रे कौटल्येनौदकदुर्गनिर्माणप्रसङ्गे परिखादीनां जलमार्गाणां खननं तत्र कृत्रिमजलप्रवाहस्य व्यवस्थायाः नावागमस्य प्रबन्धनमित्यादयो विषयाः सविस्तरं विवेचिताः। एवं कुल्यामार्गनिर्माणेन दुर्गरक्षोद्योगविकासश्चेति सम्भाव्यते। अथ गृहनिर्माणादिषु दैनन्दिनोपयोगादपशिष्टस्य जलस्यापवाहार्थं प्रणालिकादीनां प्रकल्पनं गृहोद्यानादिषु शाकफलपुष्पादिसंवर्धनार्थं च जलमार्गाणां कूपवाप्यादित गृहवाटिकादिपर्यन्तं कुल्याखननं शालानिर्माणविशारदैः बहुश उपदिष्टम्। समासेन कुल्याप्रकल्पनस्य प्रयोजनभूताः हेतवोऽधोनिर्दिष्टेषु बिन्दुषु विश्लेषयितुं शक्यन्ते–

१. कृषिविषयाः
२. रक्षाविषयाः
३. गृहनिर्माणविषयाः
४. गृहोद्यानादिविषयाः

अस्तु। कुल्यायाः स्वरूपं प्रभेदाः प्रकल्पनपद्धत्यादिविमर्शे प्रथमं तावदिष्टार्थ–विमर्शोऽपेक्ष्यते। कुल संस्त्यायने बन्धुषु चेति धातोः यत्प्रत्ययाद् व्युत्पन्नः 'कुल्या' इति शब्दो लोके प्रायः संस्त्यायनार्थे प्रसिद्धः। स्त्यै ष्ट्यै शब्दसलतयोरिति धातोः व्युत्पन्नस्य संस्त्यायनमिति शब्दस्यार्थः प्रसारो विस्तारो वेति, सलतो नाम प्रसारविस्ताराविति शब्दकोषः। अमरकोशे कुल्याऽल्पिका चेति कृत्रिमसरितोः नामन्युक्ते। तत्र नदीसम्बद्धः कृत्रिमजलमार्गोऽल्पिका कृत्रिमा जलप्रणालिका च कुल्येत्युक्ता–

**कुल्या नदी कुल्यमस्थि कुल्या वारिप्रणालिका।**
**धरणेर्नदीमात्रेऽपि कुल्याल्पा कृत्रिमा सरित्।।**

अमरकोषः– वारिवर्गः–३४

अथ च–

**कुल्या पयःप्रणाल्यां च नद्यां जीवन्तकौषधौ।।**

मेदिनीकोषः– ११४ / १४–१५

यथा च–

**एकं कृत्रिमस्वल्पनद्याः द्वयोः प्रणाली पयसः पदव्याम्।**

अमरकोषः– वारिवर्गः– ३५

इत्यादिभिः कोषवचनैः कृत्रिमजलनिर्गमस्यार्थे प्रचलितेषु नामसु कुल्येति शब्दः पयःप्रणाल्यर्थे ख्यातः। वस्तुतः कृत्रिमजलनिर्गमस्य सर्वेऽपि भौमाः मार्गाः, जलोच्छ्वासाः, परीवाहाः, प्रणाल्यः, नाड्यः, प्रणाला इत्यादयः 'कुल्ये'ति शब्दस्यार्थेऽन्तर्भूताः यतोहि नद्यादीनां वाहिजलानां जलाशयकूपादीनां स्थिरजलानां च यथापेक्षितः विस्तारः प्रसारश्चैव क्रियते कुल्याखननेन। अतएवात्र सर्वेषामपि कृत्रिमजलप्रवाहानां कृते कुल्येत्यभिधानं प्रयुक्तम्। अनया दृशा कुल्याप्रकल्पनस्योक्तेषु चतुर्षु हेतुषु वर्गद्वयं समीहते–

क. वास्तु (भवननिर्माणम)

ख. सेचनम्

उक्तयोः सन्दर्भयोः प्राचीनभारते कुल्यानिर्माणयुक्तयः तत्स्वरूपञ्च तत्तच्छास्त्रेषु बहुशो वर्णितम्। तत्र प्रतिनिधितया कॉश्चित्सन्दर्भानाश्रित्य तद्विषयक उपन्यासः क्रियते।

**वास्तुप्रयोजनार्थं कुल्यानिर्माणम्–**

वास्तुविषयोऽतिव्यापकः। तत्र च दुर्गगृहदेवायतनादिनिर्माणकाले जलनिर्गमाणां समुचितव्यवस्थापनं न केवलं विकसितजीवनपद्धतेः परिचायकं भवत्यपितु

स्वच्छसुदृढसुनियोजितभवननिर्माणकलायाः प्रत्यायकोऽपि भवति। अविच्छिन्नैः जलोच्छ्वासैः बाह्यान्तरमलशुद्धिः वातावरणनैर्मल्यञ्च भवितुमर्हति, येन शान्तिरारोग्यं चित्तप्रसादश्च जायते। अतएव शालानिर्माणे शिल्पविचक्षणैः भूम्यन्तर्वर्तिन्यो बहिर्वर्तिन्यश्च प्रणालिका अवश्यं प्रकल्पनीयाः मताः। तदर्थञ्च सामान्यजलोच्छ्वासानां प्रणालानां प्रणालिकादीनां च निर्माणविधिरुल्लेखितः। शुक्रकौटल्यादयो नीतिकारा अर्थशास्त्रकाराश्च राज्यप्रबन्धान्तर्गतं यत्र दुर्गनिर्माणविधेः विवेचनं कुर्वन्ति तत्र राजधानीप्रस्थापनार्थं स्पष्टतया स्वीकुर्वन्ति यद्राजधानी तत्रैव प्रस्थापनीया यत्र जलसंसाधनानि भूयिष्ठं तथोपलब्धानि स्युः, यथाऽवश्यकतानुसारेण जलावाप्तिर्भवेत्। शुक्राचार्यः 'नानावृक्षसमाकीर्णे' 'सुबहूदकधान्ये' 'आसिन्धुनौगमाकूले' 'नातिदूरे महीधरे' (शुक्रनीतिः– १–२१३–२१४ ) राजधानीं प्रतिष्ठाप्य तां परितः प्रजानां निवेषणं कर्तव्यमिति स्वीकरोति। सिन्धुः नदीपर्यायः। एवं राजधान्याः दुर्गतः नदीपर्यन्तं नौगमस्तदैव सम्भाव्यते यदा बृहत्तराभिः कुल्याभिः तस्य सम्बन्धो भवेत्। कौटल्य औदकदुर्गस्य निर्माणं नदीसङ्गमेऽगाधजलस्य ह्रदस्य समीपे वोपयुक्तं मन्यते, सर्वतश्च नदीसंयुक्त–जलप्रवाहव्यवस्थां नितरामपरिहार्यां मन्यते–

**वास्तुकप्रशस्ते देशे नदीसङ्गमे ह्रदस्य वाऽविशोषस्योद्यानसरस्तटाकस्य वा वृत्तं दीर्घं चतुरश्रं वा वास्तुकवशेन प्रदक्षिणोदकं पण्यपुटभेदमंसवारिभ्यामुपेतम्।**

अर्थशास्त्रम् –२/३/५

शुक्राचार्यो वापीकूपादिजलयन्त्रैः सुशोभितं दुर्गं प्रशस्तं मन्यते। यथोक्तम्–

**प्रशस्तवापीकूपादिजलयन्त्रैः सुशोभितम्।**

शुक्रनीतिः– १/२१८

अत्र 'आदि' इति पदेन कुल्याल्पिकयोरेव सङ्केतः क्रियते। शुक्रनीतौ राजमार्गेषु कूर्मपृष्ठवत्कठोरां मार्गभूमिं प्रकल्प्य जलनिर्गमार्थं पार्श्वखातानां निर्देशः कृतः–

**कूर्मपृष्ठा मार्गभूमिः कार्या ग्राम्यैः सुसेतुका।**
**कुर्यान्मार्गान्पार्श्वखातान् निर्गमार्थं जलस्य च।।**

शुक्रनीतिः–१/२६६

पार्श्वखाताः मार्गमुभयतः प्रकल्पिते कुल्यापद्धती एवेति प्रतीयते। वर्षादिकालेष्वेते पार्श्वखाताः मार्गभूमिं प्लावनाद्रक्षन्ति, जलस्य भूमिष्ठीकरणे च साहाय्यं कुर्वन्ति। जनमार्गेभ्यो व्यतिरिक्तं मानववसतिष्वावासीयोपनिवेशनियोजनस्याङ्गत्वेन गृहपृष्ठेषु वीथिकां प्रकल्प्य मलनिर्हरणार्थं स्थलस्य व्यवस्था विहिता। अनेन स्थलेन भूम्यन्तर्वर्तिकुल्ययैव भवितव्यम्। यथोक्तम्–

**राजमार्गमुखानि स्युर्गृहाणि सकलान्यपि।**
**गृहपृष्ठे सदा वीथिर्मलनिर्हरणस्थलम्।।**

शुक्रनीतिः – १/ २६७

अग्निपुराणे गृहनिर्माणकाले गृहप्रासादवृद्धये जलापवाहमार्गाणां मानादिकं दिगादि च सम्यग् विचारितम्। तदनुसारेण एकाशीतिपदैः वास्तुपूजनं विधाय सूत्रपाततः दश प्राङ्मुख्यः दश चोत्तरमुख्यः नाड्यः (प्रणाल्यः) कल्पनीयाः। प्रकृत्यनुसारं तासां नामान्यप्युक्तानि–

**नगरग्रामदुर्गादौ गृहप्रासादवृद्धये।**
**एकाशीतिपदैर्वास्तु पूजयेत्सिद्धये ध्रुवम्।**
**प्रागास्यां दशधा नाड्यस्तासां नामानि वै ब्रुवे।**
**शान्ता यशोमती कान्ता विशाला प्राणवाहिनी।**
**सती वसुमती नन्दा सुभद्रा च मनोरमा।**
**उत्तरास्या दशान्याश्च एकाशीत्यङ्घ्रिकारिका।**
**हरिणी सुप्रभा लक्ष्मीर्विभूतिर्विमला प्रिया।**
**जया ज्वाला विशोका च स्मृतास्ताः सूत्रपाततः।।**

अग्निपुराणम् – १०५/१–४

तन्त्रसमुच्चयाख्ये ग्रन्थे शङ्करमिश्रपाद एतासां प्रणालीनां निर्माणविधिविवेचने कथयति यदौदीच्ये सूत्रेऽम्बुसूत्रं कल्पयित्वा विवरसूत्रं कल्पयेत्, तस्य मानं च द्वारमानस्य १/१२६ तमांशात्मकं भवेत्। अत्रोल्लेखनीयं यज्जलनिर्गमसौविध्याय प्रणाल्यः शालाभूमौ जालवत्प्रसृताः भवन्ति। अथ प्रणालः सर्वतोऽपवाहं बहिर्नयत्यतस्तस्य विस्तारोऽन्तःप्रदेशाद् किञ्चिदल्पो बहिश्चाधिको भवेत्। तं च प्रणालमधिकुड्यं (main hole) संयोजयेत्–

**प्रत्यन्ते वा गलन्ते वा रचयतु तदुदङ्मध्यसूत्रेऽम्बुमार्गम्**
**सोमेशान्तरोद्यद्वसुनवदशभागादधिकं वा व्यतीत्य।**
**मासूरोत्सेधमात्रं चरणविरहितं वाऽर्धवृद्धं प्रणालम्**
**निर्यातं बाह्यतोऽन्तर्विनिहितमधिकुड्यं तदर्धांशमात्रम्।।**

तन्त्रसमुच्चयः – २/२१

एवं वास्तुसन्दर्भे प्रणालीजलोच्छ्वासप्रणालादिरूपेण जलमार्गतया कृत्रिमापवाहतया वा कुल्यानिर्माणमुपदिष्टम्। एवमेव देवतायतनेऽपि प्रणालिप्रकल्पनस्य स्वरूपमुक्तं वर्तते। किन्तु प्रसङ्गवशादुक्तरूपेण चर्चामात्रमिष्टमिति कृत्वा कृषिप्रयोजनार्थे प्रकल्प्यमानानां कुल्यानामुल्लेखः क्रियते।

## कृष्यर्थं कुल्याप्रकल्पनम्

लोके यत्र–यत्र मानववसतयः भवन्ति, तत्र–तत्रान्नोत्पादनार्थमदेवमातृका कृषिः कृत्रिम जलप्रवाहाधीनैव भवतीति सर्वेषामेव बोधविषयः। नदीकूलेषु नदीभ्यः दूरस्थेषु ग्रामेषु च सांवत्सरिकधान्यानां कल्पनार्थं पुष्पफलशाकाद्यवाप्तये च सेचनार्थं यथाकालं यथापेक्षितञ्च जलं कुल्यानियोजनेन विना न लब्धुं शक्यते। उल्लेखनीयमस्ति यत्कौटल्योऽर्थशास्त्रे सीताध्यक्षस्य दायित्वतया यथाकालं क्षेत्रेषु वपनादिप्रबन्धनस्य चर्चां कुर्वन् वपनयोग्यधान्यं द्विधा निर्दिष्टवान्– हैमन्यं ( वर्षाजलैः समृद्धं ) कुल्यावापं च–

**हैमन्यानां च कुल्यावापानां च कालतः।**

अर्थशास्त्रम् – २/४०/२४

अग्निपुराणेऽदेवमातृकेषु देशेषु स एव देशः प्रशस्तो मतो यत्र जलस्य यथायोग्यं विभाजनस्य व्यवस्था भवति–

**अदेवमातृको भक्तजलो देशः प्रशस्यते।**

अग्निपुराणम् – २२२/२

विचारणीयं यद्भक्तजलत्वं नाम नद्यादिप्राकृतिकजलस्य सर्वदेशेषु वितरणस्य व्यवस्थापनमेव तच्च कुल्यादिकृत्रिमजलमार्गनिर्माणेनैव सम्भाव्यते।

## कुल्याभेदाः

जलस्रोतांस्यधिकृत्य कुल्याः प्रायः चतुर्धा उक्ताः– नदीमातृमुखाः, जलाशयाश्रिताः, कूपाश्रिताः, पर्वतपार्श्ववर्तिन्यश्च। तासां क्रमशः विवेचनं क्रियतेऽत्र–

## नदीमातृमुखा कुल्या

नदीजलेन समृद्धो देशो नदीमातृक इत्युच्यते ( अमरकोषः – भूमिवर्गः – १२)। अतः येषु देशेषु नदीप्रवाहो दृश्यते तत्र समीपस्थेषु स्थलेषु नदीप्रवाहं क्षेत्रोन्मुखं कृत्वा सेचनार्थं कुल्याः प्रकल्प्यन्ते। वैदिककाले प्रायः नदीमातृमुखाः कुल्या एव कृष्यर्थं प्रकल्पिता आसन्निति विविधैः मन्त्रैः ज्ञायते। एकस्मिन् मन्त्रे इन्द्राद् भीतानां कृत्रिमधेनानामुल्लेखः प्राप्यते–

**त्वद् वावक्रे३न धेना रेजन्ते विश्वा कृत्रिमाणि भीषा।**

ऋग्वेदः – ७/२१/३

धेना नदी उच्यते। एवमिन्द्राद् भीता कृत्रिमा धेना नदीमातृमुखा कुल्या इति प्रतीयते, यस्यां वर्षाकाले जलातिरेको भवितुमर्हति, येन क्षेत्रेषु जलौघभयं सञ्जायते।

एतस्मादेव कारणात् नदीमातृमुखाः कुल्याः सर्वथा नोपयुक्ताः भवन्ति। अत एतासां प्रकल्पने सावधानतया वर्तितव्यम्। प्रथमं तावद्यत्र सततजलपूरिताः जलाशयाः न दृश्यन्ते तत्रैव नदीप्रवाहः क्षेत्रोन्मुखः करणीयः। नदीमातृमुखायाः कुल्यायाः निर्माणेऽल्पव्ययोऽल्पश्रमश्चापेक्ष्यते। काश्यपस्य मतानुसारेण यत्र भूस्वभावत ऊर्ध्वभागे नद्यादिः दृश्यते तत्रायं विधिः प्रशस्तः। यथोक्तम्–

**यत्रोर्ध्वभागे नद्यादिः दृश्यते भूस्वभावतः।**
**तत्र नद्याः मुखं कार्यं स्वतःप्रस्रावभासुरम्।।**
**कृषियोग्यं स्थलं यत्र विद्यते देशभूमिषु।**
**प्रायस्तदूर्ध्वके भागे दूरे वा दूरतोऽपि वा।।**
**कुल्याधारः प्रकर्तव्यः कृषिकार्यविचक्षणैः।।**

काश्यपीयकृषिसूक्तिः – ११५–११६

नदीमातृमुखायाः कुल्यायाः प्रकल्पनेऽवधेयं यद्वर्षादिकाले जलौघादिना कुल्यागामिनो देशा अपि प्रभाविताः भवितुमर्हन्ति। तत्र च धान्यसमृद्धिः जनधनादिकञ्च प्रणष्टुं शक्यतेऽतः नदीमुखानां कुल्यानां प्रकल्पनं तत्रैव कर्तव्यं यत्रोत्तुङ्गभूमिः स्यात्। तत्र च नियमः स्याद्यत् प्राग्गामिन्या नद्या संयुक्तां कुल्यां निम्नतरभूमौ कल्पयेत्। कोणेषु प्रविष्टायां नद्यां तूत्तुङ्गतरभूमौ कुल्यारम्भः करणीयः–

**प्राग्गामिन्यां निम्नगायां कुल्यारम्भः क्वचित्स्थले।**
**तथा पश्चिमगामिन्यामथवा तां प्रकल्पयेत्।।**
**कोणान्तरप्रवेशिन्यामपागायामपि क्वचित्।**
**क्रमेणोत्तुङ्गभूमिस्तु सर्वत्र हि विशिष्यते।।**

तदेव – ११७–११८

नदीमातृका कुल्या ग्रामीणजनैः स्वयमेव हिताहितं विचार्य स्व–स्वक्षेत्रेषु प्रवेशयितुं शक्यते। तस्याः वैपुल्यं च यथावश्यकं चतुर्हस्तत आरभ्य दशहस्तमानं यावद् भवितुमर्हति–

**चतुर्हस्तः पञ्चहस्तः षट्हस्तः सप्तहस्तकः।**
**दशहस्तकमानं वा कुल्यावैपुल्यमीरितम्।।**

काश्यपीयकृषिसूक्तिः – १२१

जलौघादिकाले सस्यक्षेत्रेषु जलाधिक्यं मा भवेदिति विचार्य नद्याः तलारब्धः विपुलपरिमाणात्मकः जलाशयो निर्मेयः। एवं वर्षाकाले नद्यां वृद्धं जलं जलाशये संरक्ष्य कुल्यामार्गेण क्षेत्रेषु जलं प्रापणीयम्। पुष्करिण्यादिष्वपि नदीजलं प्रवेश्य ताभ्यः कुल्या संयोजयितुं शक्यते। अग्निपुराणे पुष्करिण्यां नदीजलस्य प्रवेशार्थं प्रशस्यकालः मूलनक्षत्रे विहितः–

**नक्षत्राणि तथा मूलं शस्यन्ते द्रुमरोपणे।**

**प्रवेशयेन्नदीवाहान् पुष्करिण्यां तु कारयेत्।**

अग्निपुराणम् – २८२/४

एवं ग्रामाद् ग्रामं वनाद्वनंतलञ्चाक्रम्य तत्तत्क्षेत्रेषु वाहिनीभिः नदीभिः संयोज्य कुल्यास्तथा प्रकल्पनीयाः यथा सर्वर्तुषु पर्याप्तं जलं सेचनपानोपस्पर्शादिप्रयोजनार्थं प्राप्यताम्।

## जलाशयाश्रिताः कुल्याः

यत्र क्षेत्रेषु नदीप्रवाहो न वर्तते, भूम्यपेक्षया वा निम्नभूमिषु विद्यते तत्रोपलभ्यमानेषु जलाशयेषु तदाश्रिताः कुल्याः प्रकल्पनीयाः। यत्र प्राकृतिको जलाशयो न विद्यते तत्र नदीहीने सैकतप्रदेशे पाषाणादिरहितायां स्निग्धभूमौ जलाशयं प्रतिष्ठाप्य ग्रामेषु क्षेत्रेषु उद्यानाक्रीडादिषु वा कुल्याः नेयाः। यथोक्तं काश्यपीयकृषिसूक्तौ–

**नदीहीने क्वचिद्देशे सैकतस्थलकल्पिता।**

**कुल्यापि सुखायैषा निश्चिता कृषिकोविदैः।।**

**सततस्रावसंयुक्ता स्थली सा ग्रामवर्जिता।**

**सुक्षेत्रा सुगुणोपेता सस्यक्षेमाय कल्पते।।**

**ह्रदारब्धां तु वा कुल्यां नेयात् स्वग्रामसम्पदे।**

**उद्यानायापि वा देशे चाक्रीडायापि वा क्वचित्।।**

काश्यपीयकृषिसूक्तिः – १२९–१३०

जलाशयाश्रिताः कुल्याः जलाशयं परितः प्रकल्पनीयाः, ताभ्यश्च कुल्याभ्यः तदासन्नवर्तिषु क्षेत्रेषु जलप्राप्तिर्भवेत्। प्राचीनकाले चन्द्रगुप्तमौर्यस्य राज्ये सुदर्शनाख्यो जलाशयो निर्मापित आसीदित्युल्लेखः प्राप्यते। तटाकादिनिर्माणं राजदायित्वं वा धर्मात्मनां श्रेष्ठिनां धनिकजनानां वा कर्तव्यं मन्यतेस्म। उक्तः सुदर्शनो नाम सरोवरः बृहत्स्तरे सेचनार्थं प्रयुज्यतेस्म, स च कुल्याभिः दूरतरक्षेत्रैः सम्बद्ध आसीत्।

## कूपाश्रिताः कुल्याः

कूपाश्रिताः कुल्याः विशेषतः उद्यानादिषु सेचनार्थं कल्प्यन्तेस्म। कृष्यर्थं सामान्यतः विंशतिहलैः कृष्यमाणायां भूमावेकः कूपः पर्याप्तं भवेदिति कौटल्यस्य मतम्–

**दशकुलीवाटं कूपस्थानम्।**

अर्थशास्त्रम् – २/४०/

वैदिककाले कूपेभ्यश्चक्रयन्त्रैः प्रणालिकामार्गेण जलनिःसारणस्योल्लेखः प्राप्यते।

तदर्थञ्च कूपसंलग्नेष्वाहावेषु जलं सञ्चित्योद्यानादिकं प्रति प्रणालिप्रकल्पनस्य परम्पराऽसीत्। साम्प्रतमप्येष सेचनविधिः लघुस्तरीयैः कृषकैः प्रशस्यते। कूपाश्रिताः कुल्याः विशेषतः शाकादिसंवर्धनाय ग्रीष्मकाले च सस्यक्षेत्रेष्वपि सेचनाय प्रशस्यन्ते। अथ यत्र नद्याश्रिताः कुल्याः प्रकल्पयितुं न शक्यन्ते, तत्रायमुपायः श्लाघ्यो मतः–

**यस्मिन्क्षेत्रे ग्रीष्मकाले सस्यक्षेत्राय वा पुनः।**
**उद्यानायापि वा नीरं न पर्याप्तं हि कुल्यजम्।**
**तस्मिंस्तु देशे सर्वत्र कूपं निर्मापयेद् बुधः।**

काश्यपीयकृषिसूक्तिः – १४७–१४८

यथावश्यकं कूपं क्षुद्रकूपं महाकूपं वापिका वा दृढं निर्माप्य सोपानसंलग्नं घटीयन्त्रं शिलाभिः प्रकल्पयेत्। ततश्च कूपपर्यन्तेषु क्षुद्रकुल्याः प्रकल्प्य सस्यक्षेत्रैः संयोजयेत्। यथोक्तम्–

**घटीयन्त्रस्थलं तीरे शिलाभिः परिकल्पयेत्।**
**ततः सलिलनिःस्रावहेतवे दृढभूमिके।।**
**तीरेषु क्षुद्रकुल्यां च स्थापयेत्क्षेत्रयोग्यकम्।**

काश्यपीयकृषिसूक्तिः –१६८–१६९

अथ च–

**कूपादितीरभाग्लोके दृष्टं सर्वत्र सर्वतः।।**
**तन्नीरं कुल्यकायोगात् सस्यक्षेत्राय शस्यते।**

काश्यपीयकृषिसूक्तिः –१७१–१७२

पारम्परिकरूपेण नदीतटेषु तदन्तर्वर्तिषु द्वीपेषु वा क्षुद्रकूपानां निर्माणमिदानीमपि प्रचलितं वर्तते। क्लेदयुक्तेषु सैकतप्रदेशेषु क्षुद्रकूपानां खननं सरलं भवति।

## पर्वतपार्श्ववर्तिनी कुल्या

पर्वताः वाहिजलस्य प्राकृतिकस्रोतस्त्वेन विद्यन्ते। निर्झरप्रस्रवणादिभ्यः वहज्जलं पाषाणैरवरुध्यमानं सदागारतया सञ्चितं भवति। शैलेष्ववस्थितं वा नदीप्रस्रवणादीनां पर्वतीयक्षेत्रे चाप्रधानधारारूपेण वा निःसृतं जलं शिलोद्भेदनेन कुल्याः प्रकल्प्य पर्वतपार्श्ववर्तिक्षेत्रेषु जलप्रवाहरूपेण प्रवेशयितुं शक्यते। काश्यप एतदर्थं 'गिरिप्रस्रवणोपेतम्' इति मात्रमुक्त्वैवंविधानां कुल्यानां चर्चां करोति। किन्तु पर्वतपार्श्ववर्तिन्यः कुल्याः प्रशस्याः नोक्ताः। तत्रैकं कारणं तासां पाषाणभूयिष्ठः जलस्राव इति वक्तुं शक्यते। पर्वतेषु हि जलस्रावो निरन्तरं ऋजुश्च भवितुं नार्हति। कुल्याखननमपि तत्र सुकरं न स्यात्। तथापि पर्वतीयप्रदेशेष्वितरथा कुल्याप्रकल्पनाभावे

प्राप्तसाधनैरेव सस्याय जलं प्राप्तुमिष्यते। अतएवं वैकल्पिकरूपेणैताः कुल्या अस्थायिप्रयोगार्थं कल्प्यन्ते। वैदिकसंहितास्वहितर्दनं वृत्रहननं त्वष्ट्राऽहितक्षण-मित्यादिप्रसङ्गः सन्दर्भेऽस्मिन् चिन्तनीयः। अहिः वृत्रमिति पदयो एकः प्रयोगः कठोरपाषाणस्यार्थे कृतः। एवं प्रतीयते यत्पाषाणान् बिभिद्य कुल्याकारतया जलनिर्गममार्गाः क्रियन्तेस्म।

उक्तप्रकारेण चतुर्विधा अपि कुल्याः ऊर्ध्वाधः जलस्थितिमवेक्ष्य सैकते मृद्दोषरहिते वा भूमौ जलनाडीं परीक्ष्य नदीमातृमुखाः जलाशयाश्रिताः कूपाश्रिताः वा प्रकल्पिताः कुल्याः प्रशस्ताः मताः। यत्र भूमिः जलं शोषयति तत्र कुल्या न प्रकल्पनीया। ऊषरभूमौ क्षारभूमौ वापि कुल्याप्रकल्पनं न कर्तव्यं यतोहि तद्दोषेण सेच्यमाना भूमिरपि प्रभाविता स्यात्–

**पाययेत्शोषयेद्वापि स्वान्तर्दोषादिभिः स्वयम्।**
**अतस्तदभूतलं वर्ज्यं कुल्यानिर्माणकोविदैः।।**
**क्वचिदूषरभूमिश्च दृश्यते सर्वतः क्षितौ।**
**सा चापि वर्ज्या कुल्यायै भूदोषाक्रान्तभूरपि।।**

काश्यपीयकृषिसूक्तिः – १३३–१३४

आधुनिककुल्याविशेषज्ञाः जलप्लावनक्षारीयतादिसमस्यानां निराकरणार्थं कुल्यानां शिलेष्टकादिभ्यः पक्वीकरणमुपमृद्विधिनाऽधोमृद्विधिना वा जलनिःसारणव्यवस्थया, नलकूपानां संरचनं चान्यतमोपायतया कुर्वन्ति। जैवजलविकासोऽप्यन्यो विधिः।

स्मरणीयमस्ति यत्संस्कृतसाहित्ये यत्र जलाशयादीनां प्रतिष्ठापनमुक्तं तत्र वृक्षोद्यानादीनां रोपणं पोषणं चाप्युक्तम्। विशेषतः कुल्यानिर्माणसन्दर्भे काश्यपः **'दृढप्रणालिकासेतुमार्गेण सुरक्षितम्'** 'वराहमिहिरश्च 'तटवृक्षैः सुशोभितम्' जलाशयं प्रशस्यं मन्यन्ते। काश्यपस्य मते वर्षाकाले शतं कुल्यादीनां रक्षणं तासां च मासक्रमेण वर्षक्रमेण वा तटरक्षणकारिभिः रक्षणं नृपतेः प्रबन्धमिति–

**मासक्रमेण वा वर्षक्रमेण च मुहुर्मुहुः।**
**स्थापयेन्नृपतिस्तत्र तटरक्षणकारिणः।।**
**वर्षाकाले विशेषेण कुल्यादीनां शतं तथा।**
**वापीनां दीर्घिकानां च रक्षणं क्षेमदं मतम्।।**

काश्यपीयकृषिसूक्तिः – ८१–८२

वर्षाजलेन क्षारत्वादयो दोषाः प्राकृतिकरूपेणैवाल्पतां यान्त्यपाक्रियन्ते च। एवं प्राचीनभारते कुल्यानां चतुर्विधेन प्रकल्पनेन सम्पूर्णे देशे सस्यार्थं जलापूर्तिः

क्रियतेस्म। आधुनिककुल्याप्रकल्पनविधावुक्ताः विधयः सिद्धान्ताश्चोक्ते परिप्रेक्ष्ये नवयुक्तिभिः संवलिताः स्युरित्यभियन्तृभिः वैज्ञानिकैश्चावेक्षणीयम्, येन महाकुल्याभिः प्राकृतिकसरोवरैश्च नेदीयस्थलेषु दूरतरप्रदेशेषु चाल्पश्रमेणाल्पव्ययेन निर्दुष्टाः नियन्त्रितजलाश्च कुल्याः प्रकल्प्य बह्नन्नावाप्तये सेचनं सम्भाव्यताम्। स्वीकृतं हि साम्प्रतिकैः कुल्यानिर्माणविभागीयैः वैज्ञानिकैरादर्शवाक्यमेतत्–

**'सिञ्चनेन समृद्धिर्भवति '।**



# भारतीया दण्डनीतिः

समग्रस्य भारतीयजीवनस्यावधारणाया आधारः पुरुषार्थस्य सङ्कल्पना वर्तते। सा चावधारणा कस्याञ्चित्सार्वभौमसार्वजनीनसर्वकालिकवैश्विकव्यवस्थायां केन्द्रिताऽस्ति। पुरुषार्थस्य सङ्घटनात्मकस्वरूपं धर्मार्थकाममोक्षाणां समुच्चय इति वक्तुं शक्यते। पुरुषार्थचतुष्टयस्य पक्षद्वयं विद्यते– मूर्तममूर्तञ्च। तत्र मूर्तः पक्षस्त्रिसाधनं त्रिवर्गो वेति धर्मार्थकामानां संहतिरूपेणावबोध्यते; अथामूर्तः पक्षः साध्यभूतमोक्षरूपेण कल्प्यते। मोक्षस्यामूर्तत्वे हेतुरयं यत्तस्य किञ्चिद् भावात्मकं स्वरूपं परिभाषितुं न शक्यते। सा दुःखाभावरूपसंवेदनशून्या सच्चिदानन्दरूपिणी काचिदनिर्वचनीयावस्थेति स्वीक्रियते। किन्तु साऽनिर्वचनीयावस्था निर्वचनीयलोकव्यवहारं विना न प्राप्तुं शक्यते, यथा हीशावास्योपनिषद्युक्तम्–' अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इति।

स च लोकव्यवहारः लोकयात्रा वा धर्मार्थकामानां समञ्जितसन्तुलित– व्यवस्थारूपेण परिभाष्यते। धर्मो वस्तुतः प्राणिनां स्वभावः, कामस्तस्य स्पन्दनं भवति, येन प्राणी कर्मशीलो गतिशीलश्च भवति। अर्थः कामस्य सहकारिकारक इति वक्तुं शक्यते। सामान्यतयाऽर्थो लोकयात्राप्रवर्तनस्य साधनानां समुच्चयत्वेन कल्पयितुं शक्यते।

सृष्टेरादौ व्यवच्छेदाभावाद् व्यवधानाभावाच्च धर्म एव व्यवहारस्य साधनमासीत्, यत्रातुलबलमेधासम्पन्नेन मानवेन सहितं सर्वे प्राणिनः स्व–स्वधर्मानुसारेणाव्यवहिताः समस्तव्यवहारं कुर्वन्त आसन्। न कश्चित्शास्ता आसीन्न च कश्चित्शासितः। न दण्ड आसीन्न च दाण्डिकः; सम्पूर्णा व्यवस्था नैसर्गिकर्तेनानुशासिताऽसीत्।

समस्ताः जडचेतनाः स्वाभाविकधर्मेणानुशासिताः स्व–स्वपथ्यपरानपीडयन्तः गतिशीलाः सन्तः धर्मे निरता आसन्। सौरचक्रं ऋतुचक्रं वाऽस्तु अथवा महाभूतानां सांसिद्धिकगुणानां प्रकाशनम् किं वा लोकव्यवस्था; क्वचिदपि किञ्चिद व्यवधानं नासीत्। धर्मार्थकामानामविरोधिसहभाव आसीत्। किन्तु मानवबुद्धेः विकासपरम्परया सहैव तेषामसन्तुलनं प्रारब्धम्, येन धर्मव्यवच्छेदस्य स्थितिरजायत।

तदा नैतिकव्यवस्थायामन्तरायवशात्समाजस्यानुशासनस्यावश्यकताऽनुभूता तत्कालीनप्रबुद्धवर्गेण। परिणामतः राजा तच्छासनञ्च कल्पितम्। वर्णव्यवस्थायाः

विभागः गुणकर्मस्वभावानुसारेणाभूद्येन लोकस्तद्व्यवस्था च संरक्षिता स्यात्। राज्ञ उत्पत्त्या सहैव दण्डोत्पत्तिरभवत्। त्रयाणामपि धर्मार्थकामानां रक्षार्थं भयरूपदण्डत्वेन साक्षाद्राजा समाजस्य नेतृत्वार्थं, चतुर्वर्णानामाश्रमाणाञ्च रक्षार्थं नियुक्तः। यथा महाभारते मनुस्मृतौ चोक्तम्–

**दण्डः संरक्षते धर्मं तथैवार्थं जनाधिपः।**
**कामं संरक्षते दण्डस्त्रिवर्गो दण्ड उच्यते।।**

महाभारतम् शान्तिपर्व १५/३

अपि च

**स राजा पुरुषो दण्डः स नेता शासिता च सः।**
**चतुर्णामाश्रमाणाञ्च धर्मस्य प्रतिभूः स्मृतः।।**

मनुस्मृतिः– ७/१७

मनोः मतानुसारेण दण्ड एव प्रजाः शास्ति, दण्ड एव ताः रक्षति, दण्ड एव सुप्तानामनवहितानामजागरूकाणाञ्च लोकानां जागृतिहेतुरिति। किं बहुना? दण्ड एव धर्मस्य पर्यायत्वेन कल्पितः–

**दण्डः शास्ति प्रजाः सर्वाः दण्ड एवाभिरक्षति।**
**दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः।।**

मनुस्मृतिः– ७/१८

यथा–यथा कामक्रोधलोभमोहमदमात्सर्याणां प्रवृत्तिः समाजेऽभिवृद्धिं प्राप्नोत् तथा–तथा शुचिता विरलत्वं याता। अतो लोकं धर्मे योजयितुं भयस्य सृष्टिरजायत। भयमेव हि दण्डस्य मूलं स्वीकुर्वन्ति विचक्षणाः–

**सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्जनः।**
**दण्डस्य हि भयाद् भीतो भोगायैव प्रवर्तते।।**

महाभारतम् शान्तिपर्व– १५/३४

मनुस्मृतिः– ७/२२

एवं समाजे राज्ये च नियन्त्रणार्थं धर्मशास्त्रस्य प्रवर्तकैः दण्डनीतिः प्रवर्तिता। किं वा, विद्यासमुद्देशचर्चायां प्रवर्तमानायां मनुबृहस्पतिकौटल्यादिभिः नीतिकारैः दण्डनीतिः प्रमुखविद्यास्थानत्वेन प्रतिपादिता। नीतिशास्त्रस्य धुरि वर्तमानः शुक्राचार्यस्तु दण्डनीतिरेवैका विद्येत्युद्घोष्य सैव सर्वविद्यानां मूलमित्यमन्यत। यथोक्तं कौटल्येन–

**दण्डनीतिरेका विद्येत्यौशनसाः। तस्यां हि सर्वारम्भाः प्रतिबद्धाः इति।**

अर्थशास्त्रम्– १/२/६–७

यतः समाजस्यानुशासनार्थं राज्यराज्ञोः व्यवस्थायाः उद्देश्यं धर्मार्थकामानां सन्तुलितस्वरूपं प्रतिष्ठाप्य वस्तुतो धर्मस्यैव प्रतिष्ठापनमासीदतः लोकनीतिदृशा दण्ड एव धर्मस्य पर्याय इत्युक्तम्–

**धर्मो हि दण्डरूपेण ब्रह्मणा निर्मितं पुरा।**

राजनीतिरत्नाकरः–त्रयोदशतरङ्गः–दण्डः

दण्डेन चतुर्वर्णैश्चतुराश्रमैश्च संवलितं राज्यं पालयद्राजा लोकं स्वधर्मे स्वकर्मणि च प्रवर्तितुं प्रेरयति–

**चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन पालितः।**
**स्वधर्मकर्माभिरतो वर्तते स्वेषु कर्मसु।।**

अर्थशास्त्रम्–१/४/१६

यथा पूर्वमुल्लेखितं यद्धर्मो मानवस्य स्वभाव इति। एवमेव ज्ञानमपि मानवस्य स्वभाव एव। अतः प्रायः सर्वेषां मनुष्याणां नैतिकधर्मावबोधो भवत्येव। एतस्मादेव यदा कश्चित्कथमपि धर्मविषयकमर्थविषयकं कामविषयकं वाऽनैतिककर्म आचरति तदा तस्य चित्तेऽपराधबोध आत्मग्लानिश्चावश्यमेव जायते। आध्यात्मिकस्तरे पापस्यापरपर्यायोऽयमिति वक्तुं शक्यते। अस्यामवस्थायां परिस्थितिद्वयं जायते–प्रथमं यदा मनुष्यस्य सत्त्वप्रधानमन्तःकरणं जागृतं भवति तदा तस्यान्तःकरणे स्वयमेव पापकर्मणः संवेदना भवति, तर्हि सः स्वयमेव प्रायश्चित्तं करोति। अत्र प्रायश्चित्तकर्मणो विश्लेषणस्य प्रसङ्गो नास्ति, किन्तु विचारणीयं यत्प्रायश्चित्तं काचित्स्वतः–प्रदत्तदण्डस्य प्रक्रिया एवेति वक्तुं शक्यते, यस्य प्रयोजनमात्मशुद्धिः वर्तते। अथ द्वितीयपरिस्थितौ रजःप्रधानाहङ्कारवशात्तमःप्रधानमोहवशाद्वापराधी धर्माधर्मयोः नैतिकानैतिकयोः वा भेदं कर्तुं न शक्नोति, अथवा जानन्नपि मर्यादोल्लङ्घनं करोति। अस्यां दशायां सः राज्ञा प्रसह्य विनेयो भवति–

**अनावेद्य तु यो राज्ञे सन्दिग्धेऽर्थे प्रवर्तते।**
**प्रसह्य स विनेयः स्यात्स चास्यार्थो न सिद्ध्यति।।**

नारदपुराणम्–१७/४६

सन्दर्भेऽस्मिन्नुल्लेखनीयं यद् धर्मशास्त्रं नीतिशास्त्रञ्च यं राजानमीश्वरस्य विग्रहं, साक्षाद्दण्डपुरुषं धर्मस्य स्वरूपञ्च मन्यते, धर्मच्युतः सोऽपि विनेयो भवति। उक्तविवेचनेन एवं स्पष्टीभवति यद्व्यवस्थाऽनुशासनस्य मूलं भवति, दण्डश्चानुशासनस्य लौकिक उपायो वर्तते। धर्मच्युतानां लोकमर्यादोल्लङ्घयितृणां नैतिकमूल्यहन्तृणाञ्च वशीकरणोपायो दण्ड एवेति। 'दण्ड' इति पदस्यार्थ एव दमतीत्यस्ति। किन्तु

धर्मरूपो दण्डो लोकस्य योगक्षेमसाधनं भवति, न चानौचित्यपूर्णः पक्षपातः उत्पीडनम् वा। कौटल्यः समग्ररूपेण सामाजिकव्यवस्थायाः सञ्चालिकास्वान्वीक्षिकी–त्रयीवार्तादण्डनीतिश्चेति चतुर्विद्यासु प्रथमानां तिस्राणां योगक्षेमसाधनत्वेन दण्डनीतिमेव प्रतिष्ठापयति–

**आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधनो दण्डः। तस्य नीतिर्दण्डनीतिः।**

अर्थशास्त्रम्– १/४/४–५

वस्तुतः प्रमाणैरर्थपरीक्षणस्याधारभूता न्यायविद्या आन्वीक्षिकी, सकामकर्मणः स्वरूपप्रतिपादिका ऋग्यजुःसामस्वरूपात्मिका त्रयीविद्या, कृषिपशुपालन वाणिज्याद्यर्थप्रतिपादिका च वार्ता दण्डेनैव लोकमर्यादानिर्णयं विदधति। विचारणीयं यदान्वीक्षिकी धर्मस्य, त्रयी कामस्य, वार्ता चार्थस्य प्रतिनिधिभूता विद्येति वक्तुं शक्यते। अनया दृशा दण्डस्याङ्गभूतानि चत्वारि कार्याणि भवितुमर्हन्ति–

क. अलब्धस्य प्राप्तिः (योगः)
ख. प्राप्ते रक्षणम् (क्षेमः)
ग. रक्षितस्य वृद्धिः
घ. अभिवृद्धानां पदार्थानां यथायोग्यं नियोजनञ्च

**अलब्धलाभार्था लब्धपरिरक्षिणी रक्षितवर्धिनी वृद्धस्य तीर्थेषु प्रतिपादिनी च।**

अर्थशास्त्रम्–१/४/६

क्रमबद्धरूपेणोक्तैर्घटकैरेकतो दण्डस्य स्वरूपं विज्ञायतेऽपरतश्च कस्यापि राज्यस्य समग्रसंवैधानिक–प्रशासकीययोर्व्यवस्थयोः सङ्घटनात्मकनियोजनस्य रचना ज्ञायते, यतोहि राज्यसंस्थायाः मूलमुद्देश्यं नैतिक–भौतिकाभिवृद्धिरेवेति, राज्ञः धर्मो मात्रं प्रजारञ्जनं लोककल्याणञ्चास्ति।

सन्दर्भेऽस्मिन् प्रासङ्गिकः प्रतीयतेऽयमुल्लेखो यद्राज्यं, राजा, प्रजा, चेत्येतेषां त्रैतं योगादीनां चतुर्णामपि विषयाणां संयोजनार्थं समभावेनावश्यकं वर्तते। राजाऽपि राज्यस्यैवाङ्गतया राजते, यथोक्तं मनुस्मृतौ–

**स्वाम्यमात्यो पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा।**
**सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते।।**

मनुस्मृतिः– ९/२९६

किन्तु तत्र राजा प्रमुखः, कर्ता, सूत्रधारश्च भवति। अमात्यः कोशः दण्डः मित्रं जनपदं ( राष्ट्रम् ) पुरञ्चेति राज्ञः साधनानि भवन्ति। अथ प्रजा योगक्षेमस्य विषयो भवति। महाभारतकारो वेदव्यासः, कौटल्यः, शुक्र इत्यादयो नीतिकारा अपि प्रकारान्तरेण सप्ताङ्गस्य राज्यस्य परिकल्पनं कृतवन्तः। एवं राज्यस्यावयवभूतो दण्डः राज्ञश्चतुर्षूपायेष्वन्यतमः स्वीकृतः।

परम्परागतप्राचीनधर्मशास्त्रैर्नीतिशास्त्रैश्चोपबृंहितस्याधुनिकभारतीयसंविधानस्य च बृहत्प्राचीरस्याधारशिलातया दण्डः प्रतिष्ठितः। भारतीयदण्डनीतौ दण्डस्य प्रयोजनं स्वरूपं सीमाविस्तारः दण्डाधिकारः दण्ड्यविषयाः दण्ड्यादण्ड्यविवेक इत्यादिविषयेषु चिन्तनं प्राप्यते। एषा दण्डनीतिरेव वस्तुतः भारतीयसंविधानस्याधारादर्शतया प्रवर्तिता, किन्तु देशकालपरिस्थितिसापेक्षेषु केषुचिद्विषयेषु सम्प्रति पुनरीक्षणस्यावश्यकता विद्यते। उक्तदृशा भारतीयदण्डनीतेः विश्लेषणार्थमवधेयानि तथ्यानि विचारणीयानि।

भारतीयसंविधानस्य परिप्रेक्ष्ये धर्मशास्त्रोक्तदण्डनीतेः पक्षद्वयं विचारणीयम्– दण्डसंहिता दण्डप्रक्रिया च। अपरमुखेन दण्डसंहिता दण्डनीतेः सैद्धान्तिकः पक्षः दण्डप्रक्रिया च तस्याः व्यावहारिकः पक्ष इति वक्तुं शक्यते। तत्र सैद्धान्तिकपक्षान्तर्गतं मुख्यतोऽधोनिर्दिष्टसन्दर्भेषु विचारोऽपेक्ष्यते–

१. दण्डस्य प्रयोजनम्
२. दण्डस्य स्वरूपम्
३. दण्डनीया अपराधाः
४. अभियुक्तनिर्णयः

**दण्डप्रक्रियान्तर्गतमधोनिर्दिष्टसन्दर्भेषु चिन्तनीयम्–**

क. न्यायपालिकासङ्घटनम्
ख. न्यायकर्त्रधिकाराः
ग. दण्डनिर्णयः साक्ष्यञ्च
घ. अपराधानुगुण्येन दण्डविधानं तदौचित्यञ्च

**दण्डस्य प्रयोजनम्–**

विश्वस्य सर्वेषु धर्मशास्त्रेषु दण्डस्य प्रयोजनं न्यायरक्षणमिति वक्तुं शक्यते। दण्डस्य व्यवस्था चेन्न स्यात्तर्हि समस्तेऽपि विश्वस्मिन् मत्स्यन्याय एव प्रवर्तिष्यते, यत्र नैतिकताधर्मसमानतामानवतादीनां लेशोऽपि न स्थास्यति। अतएवाप्रमादिना राज्ञा बलवतामन्यायपूर्णेभ्यः कृत्येभ्योऽशक्तानां रक्षार्थं दण्ड्यः पुरुषोऽवश्यमेव दण्डनीयः–

**यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः।**
**शूले मत्स्यानिवापक्ष्यन् दुर्बलान् बलवत्तराः।।**

मनुस्मृतिः– ७/२०

अन्यत्र मनुः राजदण्डस्योद्देश्यं पापेभ्यः मानवानां निर्मलत्वमिति स्वीकरोति–

**राजभिः धृतदण्डास्तु कृत्वा पापानि मानवाः।**
**निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो जनाः।।**

मनुस्मृतिः– ८/२८०

विचारणीयमत्र यन्मानवो धर्मभीरू भवति, अतएव सः दण्डभयाद–नुशासनमङ्गीकरोति। क्वचिद्राजदण्डभयात्क्वचिद्यमदण्डभयात्क्वचित्परलोक–भयात्सामाजिकमर्यादाभयाद्वा मानवो दुष्कर्मसु न प्रवर्तते। यथा महाभारते शान्ति–पर्वण्युल्लेखः प्राप्यते–

**राजदण्डभयादेके पापाः पापं न कुर्वते।**
**यमदण्डभयादेके परलोकभयादपि।।**
**परस्परभयादेके पापाः पापं न कुर्वते।**
**एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम्।।**

महाभारतम्–शान्तिपर्व– १५/५–६

सन्दर्भेऽस्मिन् चिन्तनीयं, यदपराधमनोवृत्तिपराणामपि पुरुषाणां दण्डाद् भयम् जायत एव। दण्डेष्वेतेषु यमदण्डः परलोकदण्डश्चाप्रत्यक्षमनागतश्च भवत्यतोऽपराधकाले प्राय एतेषां भयमचेतने मनसि तिष्ठति यस्य विचारं कृत्वाऽनुपलं सावधानो भवति मानवः, किन्तु राजदण्डः सामाजिकदण्डश्च प्रत्यक्षं भवतः। एवं दण्डस्य प्रमुखाणि प्रयोजनान्यधोनिर्दिष्टानि भवितुमर्हन्ति–

१. सामाजिकव्यवस्था न्यायरक्षा च
२. मानवाधिकाररक्षा
३. व्यक्तेः नैतिक आचरणे सुधारः
४. अपराधेषु नियन्त्रणम्
५. सामाजिकोत्कर्षाभ्युदयौ

अवधेयमत्र यद्दण्डस्योद्देश्यं कथमपि रुक्षो निरपेक्षो वा प्रतीकारो भवितुं नार्हति। एतस्मादेव धर्मशास्त्रेषु प्रथमोऽपराधो मर्षणीयः क्षम्यश्चेत्युक्तम्। अस्योद्देश्यं परिष्कारस्यावसरदानं भवतीत्यत्र न सन्देहः, किन्तु द्वितीयोऽपराधोऽवश्यमेव यमनीयो दण्डनीयश्च भवति।

दण्डस्य स्वरूपमुक्ततथ्यमवेक्ष्यैव निर्धारणीयम्। अनया दृशा दण्डस्य प्रकृतिः परिमाणश्च विचारणीयौ । दण्डोऽपराधस्य गाम्भीर्यानुकूलोऽथ च निष्पक्षो भवेन्न चातिशयकठोरो मृदुर्वा भवेत्। देशकालवयःकर्मवित्तादीन् परिज्ञायैव दण्डो विधेय इति शास्त्रकाराणां मतम्–

**ज्ञात्वापराधदेशञ्च कालं बलमथापि वा।**
**वयः कर्म च वित्तञ्च दण्डं दण्ड्येषु पातयेत्।।**

याज्ञवल्क्यस्मृतिः– १/३६८

वस्तुतो दण्डस्य रूवरूपनिर्धारणे तथ्येष्वेतेषु विचार उदारां विवेकयुक्तां च दृष्टिं सङ्केतयति, यस्याः पृष्ठभूमिः व्यापकं मनोवैज्ञानिकं चिन्तनं मानवा–

धिकारस्यावधारणा चेति वक्तुं शक्यते। यथा कौटल्यः स्पष्टं निर्दिशति, यदत्यन्तकठोरेण दण्डेन प्रजाः खिद्यन्ते; अथ चात्यन्तमृदुदण्डेन राजा अवमानित उपेक्षितश्च भवति–

**तीक्ष्णदण्डो हि भूतानामुद्वेजनीयः। मृदुदण्डः परिभूयते।**

अर्थशास्त्रम्– १/४/११५

किन्तु यथायोग्यदण्डविधायको राजा प्रजाः धर्मार्थकामेषु साधु नियोजयितुं शक्नोति। यतोहि यथादोषं दण्डप्रणयनमेव नीतिरिति ज्ञेयम्–

**यथादोषं दण्डप्रणयनं दण्डनीतिः।**

नीतिवाक्यामृतम्–विद्यासमुद्देशः

मनुस्तु देशकालशक्तिविद्यास्तत्त्वतः परीक्ष्य यथार्हं दण्डं न्यायसङ्गतं मन्यते। तथ्यमेतदेकेनोदाहरणेनावगन्तुं शक्यते। कश्चिन्नैकेभ्यो दिनेभ्यः बुभुक्षितोऽकिञ्चनः पुरुषः कुतश्चित्किञ्चित्खाद्यवस्तु चोरयित्वा भुङ्क्ते, तर्हि तस्य चोरयितुः हस्तो रसना वा कर्तनीयेति दण्डनिर्णयः कथमपि विवेकपूर्णो मानवीयो वेति न वक्तव्यम्। एवमेव निश्चयेनैव हत्या जघन्योऽपराधः, यस्यार्थं मृत्युदण्डो नानुचितः, किन्त्वात्मरक्षार्थं लोकरक्षार्थं वा परिस्थितिवशाद्वा कस्यचिदाततायिनो हत्यानिमित्तको दण्डोऽवश्यमेव मर्षणीयः। सन्दर्भेऽस्मिन्नुल्लेखनीयं यन्मनोर्मतेऽपरिहार्यपरिस्थितावुत्पन्नायामात्मरक्षार्थं गुरुबालब्राह्मणबहुश्रुतादीनामवध्यानामप्याततायिनां वधः शास्त्रविचारं विनाऽभियोगश्रेण्यां नागच्छति ( मनुस्मृतिः– ८/३५०–३५१ )। उल्लेखनीयम् यद्भारतीयसंविधानस्य धारा ९६तः धारा १०० पर्यन्तं तादृशीनां परिस्थितीनां विवेचनं कृतं वर्तते यास्वात्मरक्षार्थं कृतोऽपराधोऽभियोगयोग्यो न भवति।

भारतीयदण्डशास्त्रे पृथग्पृथगपराधानां कृते भिन्नभिन्नापराधिभिः सामान्यस्थितौ पृथक्पृथग् दण्डविधानं सविस्तरं विवेचितम्। अत्र विस्तरभयात्तेषां सर्वेषां विवेचनं न क्रियते किन्तु सन्दर्भेऽस्मिन् भारतीयदण्डनीतेः विशेषः पक्षोऽयमस्ति, यदेकतः स्वधर्ममपालयन्तः पिताऽचार्यमित्रमाताभार्यापुत्रपुरोहितादयोऽपि दण्ड्याः मतास्तत्रैवापरपक्षोऽयं विद्यते, यद्यस्यापराधस्यार्थं सामान्यो जनः कार्षापणेन दण्ड्यते तस्यैवापराधस्यार्थं राजा सहस्रगुणेन दण्ड्य इति विधानमुक्तम्। यथोक्तं मनुना–

**पिताऽचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः।**
**नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न तिष्ठति।।**
**कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतो जनः।**
**तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा।।**

मनुस्मृतिः– ८/३३५–३३६

एवमेवाशीतिवर्षीयो वृद्धः षोडशवर्षेभ्योऽल्पवयः बालः स्त्रियो रोगिणश्च सामान्याभियुक्तापेक्षयाऽर्धदण्डस्य भागिनो भवन्तीति याज्ञवल्क्यादयोऽप्युद्घोषयन्ति–

**अशीतिर्यस्य वर्षाणि बालो वाऽप्यूनषोडशः।**
**प्रायश्चित्तार्धमर्हन्ति स्त्रियो रोगिण एव च।।**

याज्ञवल्क्यस्मृतिः– ३/२४३

केषुचिदपराधेषु यस्यापराधस्यार्थं शूद्रो यथार्हं दण्ड्यतां तदर्थमेव क्षत्रियः द्विगुणतया ब्राह्मणश्च चातुर्गुण्येन दण्ड्य आसीत्। यथोक्तम्–

**येन दोषेण शूद्रस्य दण्डो भवति धर्मतः।**
**तेन चेत्क्षत्रविप्राणां द्विगुणो–द्विगुणो भवेत्।।**

ब्राह्मणः सामान्यतोऽवध्यो मतः, किन्तु गर्भपाते हेतुर्ब्राह्मण्याः निर्दुष्टस्त्रियाः वा हन्ता सोऽपि वधदण्डार्हो मतः। सामान्यतः सर्वेषु वर्णेषु स्थितानामभियुक्तानां समानदण्डविधिरुक्तः, किन्तु ब्राह्मणस्तावद् वध्यो न भवति यावत्सः ब्रह्महत्याया अभियुक्तो न स्यात्। नारदपुराणानुसारेण ब्राह्मणोऽपराधे संलग्नो भवति चेत्तर्हि तस्य शिरसा मुण्डनं विधाय ललाटे दण्डसूचकं चिह्नमङ्कयित्वा गर्दभे उपवेश्य नगरान्निष्कासयेत्–

**अविशेषेण सर्वेषामेष दण्डविधिः स्मृतः।**
**वधादृते ब्राह्मणस्य न वधो ब्राह्मणोऽर्हति।।**
**शिरसो मुण्डनं दण्डस्तस्य निर्वासनं पुरात्।**
**ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन च।।**

नारदपुराणम्– २०३/९–१०

दण्डविधेरस्य विश्लेषणे विचारणीयं यद् ब्राह्मणः समाजेऽग्रणीर्बुद्धिजीविवर्गस्य च प्रतिनिधिर्भवत्यतस्तस्यापराधबोधस्य संवेदना बलीयसी भवेदित्यपेक्ष्यते। अस्यां दशायामपमानमेव तस्यानुशासनार्थं महान्दण्डो भवति। नगरनिष्कासनं सामाजिकमर्यादायाः रक्षार्थमेव विहितं स्यात्। किन्तु वर्तमानपरिस्थितिषु प्रथमं तावद् ब्राह्मणशूद्रयोरन्तरनिर्णय एव न सुकरः। अथ च नैतिकह्रासस्य निम्नतरे स्तरे सञ्जात इदानीमपराधबोधस्य प्रतिमानान्यपि परिवर्तितानि। साम्प्रतिके कालेऽपमानेन ग्लानिप्रायश्चित्तयोः स्थाने प्रायः समाजस्य सम्भ्रान्तवर्गस्याप्यपराधिनो व्यवहारे प्रतिशोधप्रतीकारयोः भावना बलवती दृश्यते। विशेषत आर्थिकसामाजिकदृशा प्रतिष्ठासम्पन्नानामपराधिनां प्रतीकारस्य सीमानस्तथा विस्तृताः भवन्ति, यत्तत्र विधेर्गतिर्न भवति।

भारतीयदण्डविधौ वर्णानुसार्यभियोगनिर्णये तत्तद्वर्णानां बौद्धिकस्तरस्य प्राधान्यं भवति। सन्दर्भेऽस्मिन् चिन्तनीयं यदुक्ता अपवादनियमाः नितान्तं व्यावहारिकाः विवेकपूर्णाश्च सन्ति। यतः शूद्रात् क्षत्रियस्तदपेक्षया च ब्राह्मणोऽधिकविचारवान् भवेदिति

कल्प्यते। अतएव समानास्वपराधपरिस्थितिषु वर्णवैभिन्यानुसारं भिन्नव्यवहारो अपेक्ष्यते। एवं बौद्धिकोऽपि पुरुषश्चेज्जडवद्व्यवहारं कुर्यात्तर्हि नूनमेव सोऽतिशयत्वेन दण्डनीयः शासनीयश्च।

केषाञ्चिदन्येषामपराधानां कृते ब्राह्मणापेक्षया क्षत्रियः क्षत्रियापेक्षया वैश्यस्तदपेक्षया च शूद्रो अधिकं दण्डनीयो भवति। अथ च सदृशायापराधाय स्त्रीपुरुषयोः दण्ड्यवयोऽपि भिन्नं–भिन्नमुक्तम्। उल्लेखनीयमस्ति यत्सर्वेषामपराधानां कृते पुरुषापेक्षया स्त्री अर्धदण्डस्याधिकारिणी उक्ता, किञ्च द्वादशवर्षीया स्त्री षोडशवर्षीयः पुरुषश्च प्राप्तव्यवहारो मतः।

अस्य व्यवस्थाभेदस्य सामाजिकानि कारणानि प्रतीयन्ते। भारतीयसमाजे प्रायः सामाजिकार्थिकरूपेण स्त्री पुरुषाश्रिता तिष्ठति। अथ च सामाजिकमर्यादादृशोत वा पारिवारिकदायित्वदृशा परिवारे तस्याः स्थितिः पुरुषापेक्षयाऽधिकं महत्त्वमावहति, यतोहि सा जननी गृहिणी च भवति या गृहसञ्चालनस्य केन्द्रभूता भवति। अथ च मनःशारीरिकविकासदृशा स्त्रियोऽल्पवयस्येव पर्याप्तं संज्ञेयशीलाः जायन्त इति दृश्यते। विचारणीयमत्र यदेषा व्यवस्था इदानीं न प्रवर्तते। नारीस्वातन्त्र्यस्य युगेऽस्मिन् भारतीयसंविधानस्य १५ (३)तमानुच्छेदानुसारेण दण्ड्यवयःविषये देयदण्डविषये चापि स्त्रियो न विशिष्यन्ते।

## दण्डप्रकृतिः स्वरूपं वा

भारतीयशास्त्रकारैः दण्डस्य चतुर्धा प्रकृतिरुक्ता–वाग्, धिग्, धनम्, वधश्चेति। वधदण्डोऽपि पुनः त्रिधोक्तः– पीडनमङ्गच्छेदनं प्रमापणञ्चेति। प्राचीन–भारतीयधर्मशास्त्रकारैः सामान्यतः ब्राह्मणस्त्रीशूद्रेभ्यो वधदण्डः वर्जितो मतः। स्मरणीयमस्ति यत्स्त्री न केवलं परिवारस्य धूः जननी च भवत्यपितु स्वभावतो भावनाप्रधानप्रकृतिशीला कोमलहृदया सामाजिकरूपेण निर्बला च स्वीक्रियते। तस्याः सुकुमारशारीरिकसंरचना पीडनाङ्गच्छेदनाद्यमानवीयदण्डं सोढुमशक्या तत्प्रतिकूला चेति। अत एतादृग्व्यवस्थाया मूले निश्चितरूपेण मानवाधिकारविषय एवेति न सन्देहः। तादृक्कठोरदण्डावस्थायां दण्डस्योद्देश्यहानिर्भवेदथ च सामाजिकन्यायहननमपि स्यात्। शूद्रः स्वसेवाकार्येण समाजस्य वाहको भवत्यतः सः शारीरिकदृशा हृष्टः पुष्टश्च स्यादथ चापराधबोधसन्दर्भे शूद्रस्याभिज्ञता सन्दिग्धा एवातः सामान्यतया सः वाचैव शासनीयः स्यात्। वधदण्डेन समाजं प्रति तस्योपयोगयोग्यता प्रभाविता भवितुमर्हति। मानवाधिकारस्य हननञ्च भविष्यति। एवमेव ब्राह्मणः समाजस्य बौद्धिकवर्गस्य प्रतिनिधित्वाद्यथार्थतोऽध्ययनाध्यापने निरतः स्वधर्मं पालयेदिति वर्णधर्मः। कृतापराधस्य तस्य वधेन शिक्षाव्यवस्था व्यवहिता स्यात्। एतदप्यत्र चिन्तनीयं यद् ब्राह्मणोऽपि मानव एव; मानवीयदोषैः कदाचिद्युक्तः

स्यात्। किन्तु बौद्धिकस्तरे तस्य संज्ञेयतास्तरोऽधिको भवत्यतः सामान्यतः तस्य परिष्कारार्थं वाग्दण्ड एव पर्याप्तमिति विचार्यते। अपरतो विशेषपरिस्थितिषु नैतिकव्यवस्थायाः हननस्य प्रश्ने सति सर्वेऽपि वर्णाः यथार्हस्य दण्डस्य भागिनो भवेयुरिति विधानं कृतम्।

**दण्डनिर्णयः**

दण्डनिर्णयार्थमपराधानां वर्गीकरणं तद्गाम्भीर्यानुसारेण प्रथमसाहसमध्यम–साहसोत्तमसाहसत्वेन त्रिविधं विहितम्। बृहस्पतिना नारदेन च चतुर्विधाः साहसा उक्ताः–मनुष्यमारणम् (हत्या), चौर्यं, परदाराभिमर्शनम् (यौनापराधः), पारुष्यञ्च। तत्र पारुष्यमपि वाग्दण्डभेदेन द्विधा स्मृतः– वाक्पारुष्यं दण्डपारुष्यञ्च। याज्ञवल्क्या–नुसारेणापराधस्य प्रेरकोऽभियुक्ताद् द्विगुणतरदण्डभाग्भवेद्, धनं दत्त्वा चापराधस्य कारयिताऽभियुक्तापेक्षया चतुर्गुणेन दण्डभाग्भवति–

**यः साहसं कारयति स दण्ड्यो द्विगुणं दमम्।**
**यश्चैवमुक्त्वाऽहं दाता कारयेत् स चतुर्गुणम्।।**

याज्ञवल्क्यस्मृतिः– २/२३१

उल्लेखनीयमस्ति यद्भारतीयसंविधानस्य १०७, १०६तमयोः धारयोः सहायकः प्रेरकश्चापराधिना सममेव दण्ड्यौ मतौ। याज्ञवल्क्योक्तस्यास्य दण्डविधेराधारः नैतिकमनोविज्ञानमिति वक्तुं शक्यते। अस्याः व्यवस्थायाः मूलेऽपराधस्य मनोविज्ञानं चिन्तनीयम्। यथार्थतः कोऽपि मानवः स्वभावतोऽपराधी न भवत्यतः कस्यामपि परिस्थितावपराधप्रवृत्तिः साहस (सहसा विहितमिति) इत्युच्यते, यत्प्रायः प्रथमवारं क्षणिकावेशवशादुन्मादवशाद्वा भवितुमर्हति। नारदपुराणे साहसस्य कश्चिन्मनोवैज्ञानिकं लक्षणमुक्तम्–

**सहसा क्रियते कर्म यत्किञ्चिद् बलदर्पिते।**
**तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते।।**

नारदपुराणम्– २०२/१

अपराधप्रसङ्गे बलदर्पेणानायासमेव यत्क्रियते तत्साहसो भवति। मनोवैज्ञानिकस्तरे सत्यमेव प्रतीयते लक्षणमेतत्। प्रायः कृतापराधः पुरुषोऽपराधानन्तरं हतप्रभो भूत्वाऽवश्यमेव चिन्तयति यत्कथं तेनासौ साहसः कृतः। निश्चितमेवात्मग्लानिभयपश्चात्तापादयो भवास्तमुद्वेजयन्ति। अस्यां दशायां कुशलो न्यायाधिकारी प्रथमकर्तव्यतयाऽपराधिनो मनोदशाया अध्ययनं कुर्यात्। अनया दृशाऽपराधिनो व्यक्तिगतेतिहासः (case history) महत्त्वपूर्णो भवति। मनुरपि धर्माधिकरणस्य साफल्यं धर्मशास्त्रविचारपूर्वकं सारतत्त्वस्य विवेचन एव स्वीकरोति।

समग्रतः समस्तदण्डविधानस्य सारोऽयमेव भवति यदन्यायी दण्ड्यतां वादी च न्यायं प्राप्नुयात्। यत्र राज्ये समीचीना न्यायव्यवस्था न प्रवर्तते, तत्र मात्स्यन्यायः प्रवर्तते इति धर्मशास्त्रविदां मतम्। बृहस्पतिः नीतेः फलं धर्मार्थकामावाप्तिं स्वीकरोति–

**नीतेः फलं धर्मार्थकामावाप्तिः।**

एवं दण्डस्योद्देश्यमेव तत्स्वरूपनिर्धारकमिति वक्तुं शक्यते। स्वतन्त्रभारतस्य संविधानं यद्यपि भारतीयधर्मशास्त्रे प्रशस्तानि नैतिकमानवीयमूल्यान्याधारीकृत्यैव रचितं, यस्मिन्वर्तमानावश्यकतानुसारेणापेक्षितपरिवर्तनमपवादसमायोजनञ्च विहितम्; किन्तु चिन्ताविषयोऽयं वर्तते, यद्येषां न्यायसम्बन्धिमूल्यानां रक्षार्थं भारतीयसंविधानेन दण्डसंहितादण्डप्रक्रिययोः स्वरूपमवधारितं तदुद्देश्यं सर्वथा सफलमिति वक्तुं न शक्यते। अस्य सर्वाधिकं नकारात्मकपक्षः न्यायप्रक्रियासङ्घटने व्याप्तः भ्रष्टाचारः धर्मरक्षाया आवरणे क्रियमाणमधर्माचरणञ्च। खेदपूर्णविडम्बनाया विषयस्त्वयं यन्न्यायपालिकाया मेरुदण्डभूताः न्यायाधिकारिणोऽप्येतस्मादधर्माचरणान्मुक्ताः न सन्ति। न्यायाधिकरणस्य हास्यास्पदः पक्षोऽयं दृश्यते यन्न्यायकर्तुरधिकारेभ्य आरभ्य निम्नस्तरीयन्यायप्रक्रियां यावत्सर्वमप्यस्तव्यस्तमस्ति।

संवैधानिकमर्यादावशादभियोगसिद्धिः सर्वाधिकं कठिनं कार्यं वर्तत इदानीम्। न्यायाधीशस्य समक्षमपि कृतः संज्ञेयोऽपराधः प्राविहितसाक्ष्याभावेऽभियोगसिद्धौ हेतुर्न गण्यते। अपरा समस्या मानवाधिकारव्याजेन पक्षप्रस्तुतिव्याजेन च वादस्याना–वश्यकलम्बनस्येति दृश्यते। अस्य नैके दुष्परिणामाः दरीदृश्यन्ते। तत्र प्रमुखा एते भवितुमर्हन्ति–

१. आततायिनः प्रतिवादिनो वा वादिनि नैतिकभौतिकबलपातः।
२. वादिनः सांवेगिकनिर्बलत्वम्।
३. अन्याः पारिवारिकसामाजिकपरिस्थितयः।
४. साक्षिणः साक्षिणां वा पक्षपरिवर्तनम्।
५. वादिनो भावात्मकस्तरे आर्थिकस्तरे च हानिः।
६. न्यायकर्तुः नैतिकशैथिल्यम्।

कदाचिन्न्यायापेक्षी वादी वृद्धावस्थापर्यन्तमुत वा मृत्युपर्यन्तमपि न्यायं न प्राप्नोति। अभियुक्तोऽपराधस्य तीव्रतागम्भीरतापेक्षया चातितरामेव मानसिकयातनामनुभूय दण्डोद्देश्यरूपपरिष्कारस्य स्थाने विद्रोहप्रवृत्त्या आपराधिकमनोवृत्त्या वा ग्रस्तो भवति। व्यावहारिकरूपेण न्यायालये वादप्रस्तुतेः प्रागेवारक्षकैः यादृशी शारीरिकी प्रताडना, मानसिकी यातना, आर्थिकवञ्चना च क्रियते तद्भयात्प्रायः नैके वादिनः वादं न प्रस्थापयन्ति, अथवा प्रस्थाप्य प्रतिवर्तयन्ति। न्यायाधीशस्य पीठिकां यावदुत्कोचश्रृङ्ला

प्रसृता वर्तते इत्यत्र नासत्यम्। न्यायाधिकरणं प्रति काचिदाक्रोशस्यासन्तोषस्य च स्थितिरनुभूयते।

सन्दर्भेऽस्मिन् प्राचीनभारतीयन्यायप्रक्रियान्यायाधिकरणयोश्च विहङ्गमदृष्टिपातः क्रियते चेत्तर्हि ज्ञायते यत्कुमारिलभट्टशबरस्वामिभ्यां पञ्चाङ्गन्यायस्योल्लेखः कृतः। ते सन्ति–विषयः, विशयः,पूर्वपक्षः, उत्तरपक्ष, निर्णयश्च। स्वतन्त्रभारतस्य संविधानेऽप्येतेष्वेव पञ्च क्रमिकायामेषु न्यायप्रक्रियासम्पादनस्य व्यवस्था अस्ति। किन्तु न्यायाधिकरणस्य सङ्घटनमिदानीं भिन्नं वर्तते। प्राचीनभारते यथोक्तप्रकारेण न्यायाधिकरणस्य प्रमुखो राजा व्यावहारिकरूपेणानिर्णीतवादान् समीक्ष्य दण्ड्यायोचितं दण्डमचिरात् प्रयच्छतिस्म। किन्तु कार्येऽस्मिन् साहाय्यार्थं विचक्षणं धर्मशास्त्रज्ञं नीतिशास्त्रज्ञं मीमांसकमक्रूरं मृदुं स्निग्धं क्षमाशीलमुत्साहसम्पन्नमलुब्धञ्च न्यायाधीशं नियोजयतिस्म। व्यवहारसमीक्षार्थं न्यायसभा आयोज्यतेस्म, यस्मिन् ब्राह्मणः ( शास्त्रज्ञः ) राजा मन्त्रिणश्च सहोपस्थाय निर्णयं कुर्वन्त आसन्। गम्भीरेषु विवादेषु न्यायाधीशानां गणः विमृश्य निर्णयं कुर्वन्नासीत्। अस्याः प्रक्रियायाः प्रयोजनमेतदेवासीद् यन्निरपराधः क्वचिद्दण्डभाग् न स्यादथापराधी समुचितं दण्डं प्राप्नुयात्।

न्यायनिर्णयस्य नैकासु मर्यादासु द्वयस्योल्लेखः प्रासङ्गिकः प्रतीयते–

१. यावद्वादनिर्णयो न भवति तावत्कालं प्रार्थिना सह न्यायाधिकारी ( प्राड्विवाकः) सभ्यो वा वार्तां न कुर्यादिति। विज्ञायापि नियमस्यास्योलङ्घयिता प्राड्विवाकः सभ्यो वा दण्ड्यः स्यात्–

**अनिर्णीते तु यद्यर्थे सम्भाषेत रहोऽर्थिना।**
**प्राड्विवाकोऽथ दण्ड्यः स्यात् सभ्यश्चैव न संशयः।।**

२. अथ वादलम्बनस्य विषये भारतीयदण्डशास्त्रस्य स्पष्टं मतमस्ति, यत्साक्षिणः पक्षश्रवणे राजा कालापेक्षां न कुर्यात्, यतोहि कालव्यवधाने सति महान् दोषो भवति, धर्महानिश्च जायते। साक्षिणः प्रामाण्यं राजा स्वयं परीक्षेत। विशेषविषयेषु राज्ञा नियुक्तो न्यायाधीशोऽप्यस्मिन् कार्ये सक्षमः स्यात्। अन्तिमनिर्णयात् प्राक्पुनः शास्त्रविद्भिः विप्रैः मन्त्रिभिश्च विमृश्य साक्ष्यं प्रमाणीकर्तव्यं, येनान्यायो न भवेत्। यथोक्तम्–

**न कालहरणं कार्यं राज्ञा साक्षिप्रभाषणे।**
**महान् दोषो भवेत्कालात् धर्मव्यावृत्तिलक्षणम्।।**
**उपस्थितान् परीक्षेत साक्षिणो नृपतिः स्वयम्।**
**साक्षिभिर्भाषितं वाक्यं सभ्यैः सह परीक्षयेत्।।**

एवं यथाशीघ्रं वादनिस्तारणं दण्डनिर्णयश्च राजकीयानुशासन– सामाजिक– व्यवस्थययोः साधकम् इत्यत्र न सन्देहः। व्यावहारिकरूपेण वर्तमानन्यायव्यवस्थाऽस्मिन् सन्दर्भे दोषपूर्णा प्रतीयते। भारतीयदण्डसंहितायामुल्लि– खितापवादानां परिप्रेक्ष्ये

भारतीयदण्डनीतिः समीक्ष्यते चेत्तर्हि नैकेषु स्थलेषु शास्त्रपरम्पराया विरोधो दृश्यते। विशेषतः विविधवर्णीयेभ्योऽभियुक्तेभ्यः पृथक्पृथग्दण्डव्यवस्थायाः कारणं तेषां बौद्धिकसामाजिकस्थितिरासीदिति मन्तव्यम्। यथा ब्राह्मणो धर्मोपदेशकस्तद्रक्षकश्च मन्यतेऽतोऽपराधं प्रति तस्य संज्ञेयता दायित्वञ्च भूयिष्ठं भवति, अतः तद्विषयकेषु वादेषु सोऽधिकदण्डभाग् भवति। विशेषतश्चौर्यादिकर्मसु शूद्रापेक्षया वैश्याय षोडशगुणं क्षत्रियाय द्वात्रिंशद्गुणं ब्राह्मणाय च चतुःषष्ठिगुणं दण्डं दद्यादिति नियमः प्रोक्तः। अपरत्र ब्राह्मणस्य मानहानिविषये क्षत्रियवैश्यौ क्रमशः शतं पणैः पञ्चाशदधिकशतपणैश्च दण्ड्यौ मतौ, किन्तु शूद्राय जिह्वाच्छेद इति शारीरिकदण्डस्य प्रावधानमुक्तम्। जिह्वाच्छेदोऽमानवीयो दण्डो भवति, अस्य तार्किकं कारणमस्पष्टमेव। यद्यपि स्त्रीशोषणबलात्कारेत्याद्यपराधा उत्तमसाहसश्रेण्यां (मृत्युदण्डार्हत्वेन ) गणितास्तथाप्यस्मै जघन्यापराधाय शूद्रोऽङ्गच्छेदस्य मृत्युदण्डस्य वा भागी, ब्राह्मणश्चाल्पदण्डभागदण्ड्यो वोक्तः। अथ च बलात्कारस्य समये स्त्रियाः वयोऽपि दण्डस्य प्रकारनिर्णयार्थं मर्षणीयमिति। मानवीयसंवेदनास्तरे भुक्तभोगिन्याः स्त्रियाः न्यायरक्षणार्थमेष दण्डो न पर्याप्तः, यतोहि भारतीयसमाजे बलात्कारः मात्रमावेशपूर्णघटनारूपेण स्वीकर्तुं न शक्यते। अस्य न्यायस्य हेतुरप्यस्पष्टम्। बालिकायाः तारुण्यावस्थां बलात्कारस्य समये जायमानानि शारीरिकाणि मनःस्नायविकपरिवर्तनानि च विचार्य ब्राह्मणस्य दोषस्य गाम्भीर्यं न भवतीति केचित्स्वीकुर्वन्ति। भवतु नामैतस्य तर्कस्य किञ्चित्सामाजिकं कारणं, किन्तु स्त्रीत्वहननस्य पीडामनुभवन्त्याः स्त्रियाः न्यायः तस्याः मनोदशाधीना भवति न च शारीरिकस्नायविकपरिवर्तनाधीना। वर्तमानसामाजिकपरिवेशे तामस्यो वृत्तयो विकृता मानसिकता चास्यामानवीयासहजस्थितिजनके साहसे हेतुः। स्त्रीणामधिकाररक्षार्थमेतादृशा अपराधाः कठोरदण्डविषयाः भवेयुः, अपराधी पुनः कस्यापि वर्णस्य वर्गस्य वा भवतु।

निष्कर्षोऽयं, यद्दण्डस्याङ्कुशो राज्यस्य प्रथमव्यक्तिशः ( राजेति ) आरभ्यान्तिमव्यक्तिपर्यन्तमनुशासनायावश्यकं भवति। किं वा स्वयं न्यायाधीशः पुरोहितश्चापि नात्रापवादः। नियमतो यस्य विज्ञतायाः विचारशीलतायाः यादृशी सीमा भवति तादृगेव तस्य दायित्वं भवति, अपराधान् प्रति तस्यातिसंज्ञेयत्वात्सः निश्चितमेवाधिकं दण्डभाग् भवेत्। वर्तमानसमाजेऽन्धसाक्ष्यायां मूकवधिरायां च न्याय व्यवस्थायां वर्चस्वपदधनबलादिप्रभाववशान्न्यायापेक्षी क्वचिदेव यथासमयं यथोचितं न्यायं प्राप्नोति।

भारतीयधर्मशास्त्रे यानि बिन्दूनि विचार्य देशकालशक्तिवयःकर्मवृत्त्यादीनां सापेक्षं समीक्षणं विहितमासीत्, तन्मूले मानवीयव्यवहारस्य स्खलनशीलपक्षं तस्य नैतिकमनोविज्ञानञ्च दृष्टिपथेऽवधार्य वाग्धिग्धनवधदण्डानामौचित्यनिर्धारणं कृतमासीत्।



# लेखिकापरिचयः

नाम : डॉ. नवलता

जन्मतिथि : : १० जून १९५५

शिक्षा : एम.ए. (संस्कृतम्), आचार्य (साहित्यम्, प्राचीन – व्याकरणम्), पी.एच.डी.

प्रकाशितग्रन्थौ : संस्कृतसाहित्ये जलविज्ञानम्
प्रत्यूषम् (कवितासंग्रहः)

प्रकाशनाधीनग्रन्थौ : संस्कृतवाङ्मये कृषिविज्ञानम्
सुगमसंस्कृतव्याकरणम्

शैक्षिकोपलब्धयः (क) प्रायः पञ्चाशत् शोधलेखानां विविध–संगोष्ठीषु वाचनम्, पत्रिकासु प्रकाशनं च।
(ख) आकाशवाणीतः दूरदर्शनतः च कवितादि–प्रसारणम्
(ग) दिल्लीसंस्कृतअकादमीतः अन्यसंस्थाभ्यश्च पुरस्कृता।

सम्प्रति कार्यरता : विक्रमाजीतसिंह–सनातनधर्म–महाविद्यालयः, कानपुरम्।

मुद्रक : नूतन ऑफसेट मुद्रण केन्द्र, राजेन्द्र नगर, लखनऊ–04



## लेखिकाप

नाम : डॉ. नवलता

जन्मतिथि : १० जून १९५५

शिक्षा : एम.ए. (संस्कृतम्
व्याकरणम्), पी.

प्रकाशितग्रन्थौ : संस्कृतसाहित्ये
प्रत्यूषम् (कविता

प्रकाशनाधीनग्रन्थौ : संस्कृतवाङ्मये
सुगमसंस्कृतव्या

शैक्षिकोपलब्धय: (क) प्राय:
(ख) संगोष्ठीषु
आकाशवाण
(ग) प्रसारणम्
दिल्लीसंस्
पुरस्कृता ।

सम्प्रति कार्यरता : विक्रमाजीतसिंह
कानपुरम् ।

